# रामायणम्।



महर्षि वाल्मीकि प्रणीतम्।

## बालकाण्डम्।



रायोपाधिकेन श्रीप्रतापचन्द्रेण

प्रकाशितम्।

मूल्यम्विना वितरितञ्च।

“ जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। ”




कलिकाता

राजधान्यां भारतयन्त्रे

श्रीप्रतापचन्द्ररायेण मुद्रितम्।

शकाब्दाः १८०२।

उत्सर्गपत्रम्।

---

प्रत्यन्त-नरपति-शिरश्चुम्बितचरण-भारतभूमिविभूषण-दश-
दिग्विलासिनी-कर्णपूरीकृत-सुरभियशःकुसुम--दीनदयालु-
दुर्ब्बलैक-सहाय-विरहितपालक-पालक-प्रातःस्मरणीय

**श्रीलश्रीमन्महाराजाधिराजरणवीर सिंह बाहादूर**

के, सि, एस, आइ,

कश्मीरप्रदेशाधिपति-सकल मङ्गलनिलयेषु

देव

यथालका नाकपृष्ठे सर्व्वोत्कर्षेण राजते।
तथा कश्मीरनगरी भाग्येन भुवि शोभते॥
तस्यां नरपते वीर रणधीर यशोधन।
साक्षादिन्द्रो देवराजो भवान् मर्त्त्येषु राजते॥

कालेनालं बहु किमिति भो राजशार्दूल वक्ष्ये
अस्तं यातः सुखशशधरो मर्त्त्य देवार्य्यकानाम्।
धर्मः क्षीणो रुदति ह ह हा पापपूर्णा धरित्री
आशा नान्या भवति नृपते त्वत्कृपामन्तरेण॥

दुष्टस्य शास्ता सुकृतस्य पाता
त्वं देव धर्मस्य सदैव गोप्ता।
त्वत्कीर्त्तिरेवं दिशमाप्नोति
कोऽहं तवाश्चर्य्यगुणान् वदामि॥

अनुग्रहस्त्वया देव कृतोऽस्मिन् पुण्यकर्मणि ।
प्रेमपाशेन बध्नाति भारतीयान् भवत्कृते ॥

भक्त्या भूप प्रणतशिरसा वन्दितौ ते पदान्तौ
हीनोहीनः कथमुपहरेद्दर्शनार्थार्घमर्घ्यम् ।
पूतन्त्वेदं दशरथतनूजस्य चित्रं चरित्रं
प्रीत्या नीतं जनयतु महीपालतोषं सुखी स्याम् ॥

भक्तिभावावनतः किंकरः

श्रीप्रतापचन्द्ररायः ।

# भूमिका।

विदितमेवेदमाध्यतनयाना यदास्मिन् पुण्ये भारते वर्षे धर्माचारविप्लवरूपं महद्भयमापतितम्। न चास्य निदानं बुद्धिमतामगम्यम्। अर्थकरीति धिया बाल्यात् प्रभृति वैदेशिकशास्त्रालोचनं वैदेशं बुद्धिविभ्रंशं जनयति। अज्ञात्वा हि पूर्वेषां माहात्म्यादिकमस्मत्सजातीया गुरुजनेष्वकारणमास्थां परित्यजन्ति। विशेषेण कृतबुद्धयश्च म्लेच्छधर्मादिषु तेष्वेवासक्तिं प्रकुर्व्वन्ति। कालवशाद्धीनतामापन्नेऽस्मिन् भारते परितः प्रसृताभिः परकीय-माहात्म्यप्रभाभिरन्धीकृतमतयो भारतीयाः के वयमित्यजानन्तः सुतरामात्मनो हीनान् दृष्ट्वा जातिमपि विधूय नाशमभिधावन्ति। स्वावस्कन्दनमेव पौरुषं मन्यन्तेऽस्माकं कृतधियः। अहो वैदग्ध्यम्। स्वगौरवमजानतः क्व शिक्षा क्व च जीवितम्। हा मातर्भारतभूमे! तवापीदृशी दशापरिणतिः।

अथास्तां तावदनर्थं शोकोक्तेः प्रसरः। दूयते हि साधीयसां चेतः कोऽयमापतितो धर्माचारविप्लवरूपो महाननर्थः। चिन्तयति च नियतं धर्मनिष्ठः स्वजातिप्रणयी साधुः केनोपायेनास्य रोधो भवेदिति। चतुर्दशापीत्थं चिन्तयतैव मयैकदा स्थिरीकृतं यदस्माकं प्राचीनेषु पुराणादिशास्त्रेष्वस्मदीयानां बहूनां बहुपरिचयमन्तरेण नान्योपायोऽस्ति सम्यक्प्रतिरोधायास्य विप्लवस्य। बहूनां शास्त्रपरिचयश्च ग्रन्थसुलभतां विना न सम्भवति। मूल्यं विना वितरणमन्तरेण वा कुतोऽस्मिन् दुर्भाग्यवशात् निष्किञ्चनीकृते देशे साधारणस्य सुलभा भवन्ति धर्मग्रन्थाः। तिरोहितप्राया ह्यधुना धर्मचर्य्यायां प्रवृत्तिः; नापि च साम्प्रतमर्थमाहरति पौराणिकी पारमा-

र्थिकी वा विद्या। प्रभूतमर्थमन्तरेण वा कथमीदृश-बङ्ग-विस्तीर्णार्य्यधर्मशास्त्र-वितरणरूपं महत् कार्य्यं सम्पाद्यते। इत्यादिकं विचिन्त्य तादृशार्थाभावाल्लीनप्रायैव मे महती निश्चितिः।

अथातीते काले सहसा दैवदुर्विपाकवशाद्विसह्य-शोकावेगेनाहमाक्रान्तोऽभवम्। अशक्तश्च सोढुमतितीव्रमावेगं क्षिप्त इव गृहान्निर्गत्य पर्य्यटनमारभम्। पर्य्यटनक्रमेण च नाना जनपदेषु तिरस्कारमुखेन महत् सदुपदेशमाससाद। तदाहं चेतस्यकरवं यत् न कुत्रापि कदापि समारभन्ते किमपि साधारणहितं कर्म प्रायशः स्वसुखनिरता भोगविला-सिनो धनिकाः। मध्यवित्ता एव बहुशः सत्कार्य्यस्य साधका दृश्यन्ते। यतश्च जीवनमर्थसिद्धेः। अतोऽहं तथा यतेयं यथा आर्य्य इत्यभिधेयवान् स्वधर्मनिरतः सद्धर्मारामः सात्त्विको जनसाधारण एवास्य सहायतायामायाति धर्म-स्यानुष्ठानस्य।

एवं निश्चित्याहं कार्य्यमारभ्य प्रथमतो मत्प्रचारित-पूर्वस्य भारतानुवादस्य कतिपयान्यवशिष्टानि पर्व्वाण्यर्थिभ्यो दत्तवान्। ततः प्रत्याश्वस्तस्य जनसाधारणस्याग्रहातिशयं परिज्ञाय चादितो भारतस्य द्वितीयसंस्करणं खण्डशो वितरितुं प्रवृत्तः। अर्थसंग्रहार्थं च जीवितमपि तुच्छीकृत्य नाना-विदेशगमम्। अभिमानमपि परित्यज्य द्वारि द्वारि भिक्षु-रिव मुष्टिभिक्षामकरवम्। अधुनापि भिक्षयैवेदमतिविस्तीर्णं धर्म्यं कर्म सम्पाद्यते। धर्मधनाः सत्त्वनिष्ठाः सर्वभूत-हितैषिणो वदान्याः साधव एवास्य पोषकाः। तेषामेवानु-कम्पया आनुकूल्येन च मया द्वितीयसंस्करण-भारतवितरण-मतं साम्प्रतमुद्यापितम्। तृतीयसंस्करणमपि यद्वितर्य्यते,

तदपि तेषां कृपाकटाक्षबलादेवाद्धसमाप्तिं गतम्। हरिवंश-पर्व्वोऽपि तेषां प्रसादादेव वितर्य्यते। सम्प्रति तदानुकूल्यमेवापेक्ष्य पीयूषनिस्यन्दं रामायणं वितरितुमारब्धम्।

पूर्वं वङ्गानुवादमात्रवितरणमेवाभिप्रेतमासीत्। किन्तु वङ्गीयानां प्रायशो बुद्धिविभ्रंशस्य प्रभावातिशयदर्शनादीदृशे धर्म्म-कर्मणि सम्यगाभिमुख्यप्राप्तौ शङ्कितोऽहमासम्। वङ्गीयधनि-काश्च प्रायशः स्वजातौ वीतश्रद्धाः परसेवानिरताः परप्रसादलो-लुपाश्च दृश्यन्ते। पूर्वपुरुषाणां धर्माचारादिकं तेषामुपहास्यता-मायातम्। इत्थं केवलमेव वङ्गीयानामानुकूल्ये नैतत्कार्य्यस्य स्थायित्वे निरुत्साहितेन मया प्रथितयशसामार्य्यवंशावतंसानां निलयभूतस्य निखिलस्यैव भारतस्य सम्यगाभिमुख्यं काङ्क्षते, प्रार्थ्यते चास्मिन् पुण्यकर्मणि साधारणार्य्यसामाजिकानां पुण्यवतां हस्तालम्बः। अत इतः प्रभृति सर्वेषामेव भारती-यानामध्ययनार्हतामायातीति मूलमपि प्रतिश्लोकस्य नागराक्षरेण मुद्रितं वङ्गानुवादेन सह प्रकाशितव्यमित्यधुना स्थिरीकृतम्। तदनुसारेण च रामायणं प्रकाश्यते। इदानीमार्य्यधुरन्धर-शिरोरत्नभूतस्य दोर्दण्डप्रतापशालिनः पवित्रनाम्नो धर्मवीरस्य श्रीलश्रीमन्महाराजाधिराजकाश्मीरप्रदेशाधिपतेः कृपाकटाक्ष-पातेनास्मिन्ननुष्ठाने सम्यगेवाश्वस्तोऽस्मि यत्प्रकाशमागतेऽस्मिन् कर्मण्यविचारितमेवास्य स्थायितासम्पादनाय आगमिष्यन्त्यधुनापि प्राक्तनगौरवसम्पन्ना उदारचेतसो धर्मधनाः श्रीमद्धरिचरणा-तामरसरोलम्बा अस्माकं माननीयाः पाश्चात्त्या भ्रातर इति। अवलम्बितमेवेदं मे कर्म शश्वज्जीवतीत्यन्तरेण नान्यः कामो विद्यते। नाहं राजमानं प्रार्थये, नापि वित्तम्। नापि च मया शिक्षितं किमपि कौशलम्। सन्ति चास्मिन् वङ्गे कार्य्यकुशला धनिकाः ये न तथापि कौशलेन

महान्त इति परिचिता नाना सम्प्राड्भ्यः प्रसादीकृतानुपाधि-स्तूपाननायासेनैवाहरन्ति। अहन्तु दूरादेवैतान् नमस्करोमि ; शिरस्येवास्तामीदृशो मानलाभः। यदब्रवीत् जानकीहृदयकुमुद-चन्द्रमा रामचन्द्रः इयं स्वर्णपुरी लङ्का न मे रोचति लक्ष्मण। जननी जन्मभूमिश्च स्वर्गादपि गरीयसीति मद्वाक्यं पुनरपि तस्य मर्म्म गृह्णन्त्वस्माकं देशीया इत्येव कामये। धिगस्मान् यदस्मत्पैतृकं वित्तमधुनास्मद्देशे स्वपोषणमप्राप्य पारावार मुत्तीर्य्यान्यान् तोषयति।

भवति चोपसंहारे वक्तव्यं यद् धूर्त्ता यथा न वञ्चयन्ति इति विचिन्त्य डाकयोगेनैव सर्व्वेभ्य एवार्थिभ्यः पुस्तकानि प्रेष्यन्ते डाकादिशुल्कार्थञ्च तेभ्यः प्रतिनिवन्धं किञ्चिद्गृह्यत इत्यलमति विस्तरेण।

दातव्यभारतकार्य्यालयः
योड़ासांको – कलिकाता
शकाब्दाः १८०३

श्रीप्रतापचन्द्ररायः

# বর্ণ পরিচয়।

## স্বরবর্ণ।

## স্বরবর্ণ।

অ আ ই ঈ উ ঊ ঋ ৠ ঌ ৡ এ ঐ ও ঔ

অ আ ই ঈ উ ঊ ঋ ৠ ঌ ৡ এ ঐ ও ঔ

### স্বরবর্ণপরিচয়ের পরীক্ষা।

অ এ ঋ ই ও ঌ ঐ উ ঔ ৡ ঈ আ উ

অ এ ঋ ই ও ঌ ঐ ঊ ঔ ৡ ঈ আ উ

## ব্যঞ্জন বর্ণ।

## ব্যঞ্জন বর্ণ।

ক খ গ ঘ ঙ। চ ছ জ ঝ ঞ। ট ঠ ড ঢ

ক খ গ ঘ ঙ। চ ছ জ ঝ ঞ। ট ঠ ড ঢ

ণ। ত থ দ ধ ন। প ফ ব ভ ম। য র ল ব

ণ। ত থ দ ধ ন। প ফ ব ভ ম। য র ল ব

শ ষ স হ ড় ঢ়

শ ষ স হ ড় ঢ়

### ব্যঞ্জনবর্ণপরিচয়ের পরীক্ষা।

ব র ক ধ ঝ জ য য় ষ ঘ ম স খ

ব র ক ধ ঝ জ য য় ষ ঘ ম স খ

থ ফ চ ঠ ঢ ঢ় ট গ ল শ হ ছ

থ ফ চ ঠ ঢ ঢ় ট গ ল শ হ ছ

**ড ড় ঙ ত ভ ঞ দ প ণ ন ঃ ৎ**

ড ড় ঙ ত ভ ঞ দ প ণ ন ং ঃ ৎ

বর্ণযোজনা।

**কর জল পথ রস খল দশ ফল বন ঘট নখ**

কর জল পথ রস খল দশ ফল বন ঘট নখ

**ভয় শঠ**

ভয় শঠ

**অচল অলস আদর ইতর অধম অবশ আলয়**

অচল অলস আদর ইতর অধম অবশ আলয়

**ঈষৎ অপর অসৎ আসন ঔষধ**

ঈষৎ অপর অসৎ আসন ঔষধ

**কপট দশম মরণ বসন গরল ধবল রজক শকট**

কপট দশম মরণ বসন গরল ধবল রজক শকট

**জগৎ নয়ন লবণ সরল**

জগৎ নয়ন লবণ সরল

আকারযোগ।

**আ া**

আ া

**ক আ কা ম আ মা**

ক আ কা ম আ মা

উদাহরণ।

**কাক তাল পাঠ লাভ গান দান ভাগ বাস ঘাস**

কাক তাল পাঠ লাভ গান দান ভাগ বাস ঘাস

**নাম মাস শাক**

নাম মাস শাক

# वाल्मीकिरामायणम्।

## बालकाण्डम्।

श्रीरामः॥ ओं तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्॥१॥ कोन्वस्मिन् साम्प्रतं
लोके गुणवान् कश्च वीर्यवान्। धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो
दृढव्रतः॥ २॥ चारित्रेण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकः प्रियदर्शनः॥ ३॥ आत्मवान्
कोजितक्रोधोद्युतिमान् कोऽनसूयकः। कस्य बिभ्यति देवाश्च
जातरोषस्य संयुगे॥ ४॥ एतदिच्छाम्यहं श्रोतुं परं कौतूहलं
हि मे। महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम्॥ ५॥ श्रुत्वा
चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः। श्रूयतामिति चामन्त्र्य
प्रहृष्टो वाक्यमब्रवीत्॥ ६॥ बहवोदुर्लभाश्चैव ये त्वया कीर्तिता
गुणाः। मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः॥७॥ इक्ष्वाकु-
वंशप्रभवो रामो नाम जनैः श्रुतः। नियतात्मा महावीर्य्योद्युति-
मान् धृतिमान्वशी॥८॥ बुद्धिमान् नीतिमान् वाग्मी श्रीमान्
शत्रुनिवर्हणः। विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः।
९॥ महोरस्को महेष्वासो गूढजत्रुररिन्दमः। आजानुबाहुः
सुशिराः सुललाटः सुविक्रमः॥१०॥ समः समविभक्ताङ्गः स्निग्ध-

वर्णः प्रतापवान्। पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः॥
११॥ धर्मज्ञः सत्यसन्धश्च प्रजानाञ्च हिते रतः। यशस्वी ज्ञान-
सम्पन्नः शुचिर्वश्यः समाधिमान् ॥१२॥ प्रजापतिसमः श्रीमान्
धाता रिपुनिसूदनः। रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता
॥१३॥ रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता। वेदवेदाङ्ग-
तत्त्वज्ञो धनुर्वेदे च निष्ठितः॥१४॥ सर्व्वशास्त्रार्थतत्त्वज्ञः स्मृति-
मान् प्रतिभानवान्। सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः॥
१५॥ सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः। आर्य्यः सर्व-
समश्चैव सदैव प्रियदर्शनः॥१६॥ स च सर्वगुणोपेतः कौशल्या-
नन्दवर्द्धनः। समुद्र इव गाम्भीर्य्ये धैर्य्येण हिमवानिव॥ १७॥
विष्णुना सदृशो वीर्य्ये सोमवत् प्रियदर्शनः। कालाग्निसदृशः
क्रोधे क्षमया पृथिवीसमः॥१८॥ धनदेन समस्त्यागे सत्ये धर्म
इवापरः। तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम्॥१९॥ ज्येष्ठं
श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम्। प्रकृतीनां हितैर्युक्तं प्रकृति-
प्रियकाम्यया॥२०॥ यौवराज्येन संयोक्तुमैच्छत् प्रीत्या मही-
पतिः। तस्याभिषेकसम्भारान् दृष्ट्वा भार्य्याथ कैकयी॥ २१॥
पूर्वं दत्तवरा देवी वरमेनमयाचत। विवासनञ्च रामस्य भरत-
स्याभिषेचनम्॥ २२॥ स सत्यवचनाद्राजा धर्मपाशेन संयतः।
विवासयामास सुतं रामं दशरथः प्रियम्॥ २३॥ स जगाम
वनं वीरः प्रतिज्ञामनुपालयन्। पितुर्वचननिर्देशात् कैकेय्याः
प्रियकारणात्॥ २४॥ तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम
ह। स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्द्धनः॥ २५॥ भ्रातरं
दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्। रामस्य दयिता भार्य्या
नित्यं प्राणसमा हिता॥२६॥ जनकस्य कुले जाता देवमायेव
निर्म्मिता। सर्व्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः॥ २७॥
सीताप्यनुगता रामं शशिनं रोहिणी यथा। पौरैरनुगतो दूरं

पित्रा दशरथेन च ॥ २८ ॥ शृङ्गवेरपुरे सूतं गङ्गाकूले व्य-
सर्जयत् । गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥
गुहेन सहितो रामो लक्ष्मणेन च सीतया । ते वनेन वनं गत्वा
नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥ चित्रकूटमनुप्राप्य भरद्वाजस्य
शासनात् । रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥ देव-
गन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् । चित्रकूटं गते रामे पुत्र-
शोकातुरस्तथा ॥ ३२ ॥ राजा दशरथः स्वर्गं जगाम विलपन्
सुतम् । गते तु तस्मिन् भरतो वशिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः । स जगाम वनं
वीरो रामपादप्रसादकः ॥ ३४ ॥ गत्वा तु स महात्मानं रामं
सत्यपराक्रमम् । अयाचद्भ्रातरं राममार्य्यभावपुरस्कृतः ॥३५॥
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् । रामोऽपि परमो-
दारः सुमुखः सुमहायशाः ॥ ३६ ॥ न चैच्छत्पितुरादेशाद्राज्यं
रामो महाबलः । पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः
॥ ३७ ॥ निवर्त्तयामास ततो भरतं भरताग्रजः । स काम-
मनवाप्यैव रामपादावुपस्पृशन् ॥ ३८ ॥ नन्दिग्रामेऽकरोद्राज्यं
रामागमनकाङ्क्षया । गते तु भरते श्रीमान् सत्यसन्धो जिते-
न्द्रियः ॥ ३९ ॥ रामस्तु पुनरालक्ष्य नागरस्य जनस्य च । तत्रा-
गमनमेकाग्रो दण्डकाम् प्रविवेश ह ॥ ४० ॥ प्रविश्य तु महा-
रण्यं रामो राजीवलोचनः । विराधं राक्षसं हत्वा शरभङ्गं
ददर्श ह ॥ ४१ ॥ सुतीक्ष्णञ्चाप्यगस्त्यञ्च अगस्त्यभ्रातरं तथा ।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२ ॥ खड्गञ्च परमं
प्रीतस्तूणी चाक्षयसायकौ । वसतस्तस्य रामस्य वने वनचरैः सह
॥ ४३ ॥ ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् । स तेषां
प्रतिशुश्राव राक्षसानां तदा वने ॥ ४४ ॥ प्रतिज्ञातश्च रामेण
वधः संयति रक्षसाम् । ऋषीणामग्निकल्पानां दण्डकारण्य-

वासिनाम् ॥ ४५ ॥ तेन तत्रैव वसता जनस्थाननिवासिनी । विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४६ ॥ ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् । खरं त्रिशिरसं चैव दूषणञ्चैव राक्षसम् ॥ ४७ ॥ निजघान रणे रामस्तेषां चैव पदानुगान् । वने तस्मिन् निवसता जनस्थाननिवासिनाम् ॥ ४८ ॥ रक्षसां निहतान्यासन् सहस्राणि चतुर्दश । ततो ज्ञातिबधं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥ ४९ ॥ सहायं वरयामास मारीचं नाम राक्षसम् । वार्य्यमाणः सुबहुशो मारीचेन स रावणः ॥ ५० ॥ न विरोधो बलवता क्षमो रावण तेन ते । अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१ ॥ जगाम सहमारीचस्तस्याश्रमपदं तदा । तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥ जहार भार्य्यां रामस्य गृध्रं हत्वा जटायुषम् । गृध्रञ्च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ५३ ॥ राघवो शोकसन्तप्तो विललापाकुलेन्द्रियः । ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५४ ॥ मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह । कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५५ ॥ तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः । स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ ५६ ॥ श्रमणां धर्मनिपुणामभिगच्छेति राघव । सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥ ५७ ॥ शबर्य्या पूजितः सम्यग्रामो दशरथात्मजः । पम्पातीरे हनुमता सङ्गतो वानरेण ह ॥ ५८ ॥ हनुमद्वचनाच्चैव सुग्रीवेण समागतः । सुग्रीवाय च तत् सर्वं शंसद्रामो महाबलः ॥ ५९ ॥ आदितस्तद्यथा वृत्तं सीतायाश्च विशेषतः । सुग्रीवश्चापि तत् सर्वं श्रुत्वा रामस्य वानरः ॥ ६० ॥ चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् । ततो वानरराजेन वैरानुकथनं प्रति ॥ ६१ ॥ रामायावेदितं सर्वं प्रणयाद्दुःखितेन च । प्रतिज्ञातञ्च रामेण तदा बालिबधं

प्रति ॥ ६२ ॥ बालिनश्च बलं तत्र कथयामास वानरः । सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्य्येण राघवे ॥ ६३ ॥ राघवप्रत्ययार्थन्तु दुन्दुभेः कायमुत्तमम् । दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६४ ॥ उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः । पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥ ६५ ॥ बिभेद च पुनस्तालान् सप्तैकेन महेषुणा । गिरिं रसातलञ्चैव जनयत् प्रत्ययं तदा ॥ ६६ ॥ ततः प्रीतमनास्तेन विश्वस्य स महाकपिः । किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥ ततोऽगर्ज्जद्धरिवरः सुग्रीवो हेमपिङ्गलः । तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८ ॥ अनुमान्य तदा तारां सुग्रीवेण समागतः । निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६९ ॥ ततः सुग्रीववचनाद्धत्वा बालिनमाहवे । सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ७० ॥ स च सर्वान् समानीय वानरान्वानरर्षभः । दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ७१ ॥ ततो गृध्रस्य वचनात् सम्पातेर्हनुमान् बली । शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७२ ॥ तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् । ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७३ ॥ निवेदयित्वाभिज्ञानं प्रवृत्तिं विनिवेद्य च । समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७४ ॥ पञ्च सेनाग्रगान् हत्वा सप्तमं त्रिसुतानपि । शूरमक्षञ्च निष्पिष्य ग्रहणं समुपागमत् ॥ ७५ ॥ अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ॥ ७६ ॥ ततो दग्ध्वा पुरीं लङ्कामृते सीताञ्च मैथिलीम् । रामाय प्रियमाख्यातुं पुनरायान्महाकपिः ॥ ७७ ॥ सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् । न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ ७८ ॥ ततः सुग्रीवसहितो गत्वा तीरं महोदधेः । शरीरं क्षोभयामास शरैरादित्य-

सन्निभैः ॥ ७९ ॥ दर्शयामास चात्मानं समुद्रः सरितां पतिः । समुद्रवचनाच्चैव नलः सेतुमकारयत् ॥ ८० ॥ तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे । रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८१ ॥ तामुवाच ततो रामः परुषं जनसंसदि । अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८२ ॥ ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम् । अग्रहीदमलां रामो वचनाच्च गुरोस्तदा ॥ ८३ ॥ कर्मणा तेन महता त्रैलोक्यं सचराचरम् ॥ ८३ ॥ सदेवर्षिगणं तुष्टं राघवस्य महात्मनः । बभौ रामः सम्प्रहृष्टः पूजितः सर्वदेवतैः ॥ ८४ ॥ अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८५ ॥ देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् । अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८६ ॥ भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः । भरतस्यान्तिके रामो हनूमन्तं व्यसर्जयत् ॥ ८७ ॥ पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा । पुष्पकं तत् समारुह्य नन्दिग्रामं ययौ तदा ॥ ८८ ॥ नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः । रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८९ ॥ प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः । निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ९० ॥ न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् । नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ९१ ॥ न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः । न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा ॥ ९२ ॥ न चापि क्षुद्भयं तत्र न तस्करभयं तथा । नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९३ ॥ नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा । अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ९४ ॥ गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् । असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ ९५ ॥ राजवंशाञ्छतगुणान्

स्थापयिष्यति राघवः। चातुर्वर्ण्यञ्च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति॥ ९५ ॥ दशवर्षसहस्राणि दशवर्षशतानि च। रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति॥ ९६ ॥ इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम्। यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते॥ ९७ ॥ एतदाख्यानमायुष्यं पठन् रामायणं नरः। सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते॥ ९८ ॥ पठन् द्विजो वागृषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात्। वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात्॥ ९९ ॥

ओं इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये

बालकाण्डे प्रथमः सर्गः॥ १ ॥

---

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः। पूजयामास धर्मात्मा सहशिष्यो महामुनिम्॥ १ ॥ यथावत्पूजितस्तेन देवर्षिर्नारदस्तथा। आपृच्छ्यैवाभ्यनुज्ञातः स जगाम विहायसम्॥ २ ॥ समुहूर्त्तं गते तस्मिन् देवलोकं मुनिस्तदा। जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः॥ ३ ॥ स तु तीरं समासाद्य तमसाया मुनिस्तदा। शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्॥ ४ ॥ अकर्दममिदं तीर्थं भरद्वाज निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा॥ ५ ॥ न्यस्यतां कलशस्तात दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्॥ ६ ॥ एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना। प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः॥७॥ स शिष्यहस्तादादाय वल्कलं निय-

तेन्द्रियः । विचचार ह पश्यन्स्तत् सर्वतो विपुलं वनम् ॥८॥ तस्या-
भ्याशे तु मिथुनं चरन्तमनपायिनम् । ददर्श भगवांस्तत्र क्रौ-
ञ्चयोश्चारुनिःस्वनम् ॥ ९ ॥ तस्मात्तु मिथुनादेकं पुमांसं पाप-
निश्चयः । जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १० ॥ तं
शोणितपरीताङ्गं चेष्टमानं महीतले । भार्या तु निहतं दृष्ट्वा
रुराव करुणां गिरम् ॥ ११ ॥ वियुक्ता पतिना तेन द्विजेन
सहचारिणा । ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२ ॥
तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम् । ऋषेर्धर्मात्मनस्तस्य
कारुण्यं समपद्यत ॥ १३ ॥ ततः करुणवेदित्वादधर्मोऽयमिति
द्विजः । निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४ ॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुना-
देकमवधीः काममोहितम् ॥ १५ ॥ तस्येत्थं ब्रुवतश्चिन्ता बभूव
हृदि वीक्षतः । शोकार्त्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥
१६ ॥ चिन्तयन् स महाप्राज्ञश्चकार मतिमान्मतिम् । शिष्यं चैवा-
ब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ १७ ॥ शोकार्त्तस्य प्रवृत्तो मे
श्लोको भवतु नान्यथा ॥ १८ ॥ शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्य-
मनुत्तमम् । प्रतिजग्राह सन्तुष्टस्तस्य तुष्टोऽभवन्मुनिः ॥ १९ ॥
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि । तमेव चिन्तय-
न्नर्थमुपावर्त्तत वै मुनिः ॥ २० ॥ भरद्वाजस्ततः शिष्यो विनीतः
श्रुतवान् गुरोः । कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१ ॥
स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् । उपविष्टः कथाश्चान्या-
श्चकार ध्यानमास्थितः ॥ २२ ॥ आजगाम ततो ब्रह्मा लोककर्त्ता
स्वयं प्रभुः । चतुर्मुखो महातेजा द्रष्टुन्तं मुनिपुङ्गवम् ॥ २३ ॥
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः । प्राञ्जलिः प्रयतो
भूत्वा तस्थौ परमविस्मितः ॥ २४ ॥ पूजयामास तं देवं पाद्यार्घ्या-
सनवन्दनैः । प्रणम्य विधिवच्चैनं पृष्ट्वा चैनं निरामयम् ॥ २५ ॥

तत्रोपविश्य भगवानासने परमार्च्चिते। वाल्मीकये च ऋषये
संदिदेशासनं ततः॥ २६॥ ब्रह्मणा समनुज्ञातः सोऽप्युपाविश-
दासने। उपविष्टे तदा तस्मिन् साक्षाल्लोकपितामहे॥ २७॥
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः। पापात्मना कृतं
कष्टं वैरग्रहणबुद्धिना॥ २८॥ यस्तादृशं चारुरवं क्रौञ्चं हन्या-
दकारणात्। शोचन्नेव पुनः क्रौञ्चीमुपश्लोकमिमं जगौ॥ २९॥
पुनरन्तर्गतमना भूत्वा शोकपरायणः। तमुवाच ततो ब्रह्मा
प्रहसन् मुनिपुङ्गवम्॥ ३०॥ श्लोक एवास्त्वयं बद्धो नात्र कार्या
विचारणा। मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती॥ ३१॥
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम। धर्मात्मनो गुणवतो
लोके रामस्य धीमतः॥ ३२॥ वृत्तं कथय रामस्य यथा ते
नारदाच्छ्रुतम्। रहस्यञ्च प्रकाशञ्च यद्वृत्तं तस्य धीमतः॥३३॥
रामस्य सहसौमित्रे राक्षसानाञ्च सर्व्वशः। वैदेह्याश्चैव यद्वृत्तं
प्रकाशं यदि वा रहः॥ ३४॥ तच्चाप्यविदितं सर्व्वं विदितन्ते
भविष्यति। न ते वागनृता काव्ये काचिदत्र भविष्यति॥ ३५॥
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्। यावत् स्थास्यन्ति
गिरयः सरितश्च महीतले॥ ३६॥ तावद्रामायणकथा लोकेषु
प्रचरिष्यति। यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति॥ ३७॥
तावदूर्द्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि। इत्युक्त्वा भगवान् ब्रह्मा
तत्रैवान्तरधीयत॥ ३८॥ ततः सशिष्यो भगवान् मुनिर्वि-
स्मयमाययौ। तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः।
मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः॥३९॥ समाक्षरै-
श्चतुर्भिर्यः पादैर्गीतो महर्षिणा। सोऽनुव्याहरणाद्भूयः शोकः
श्लोकत्वमागतः॥ ४०॥ तस्य बुद्धिरियं जाता महर्षेर्भाविता-
त्मनः। कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्॥ ४१॥
उदारवृत्तार्थपदैर्मनोरमैस्तदास्य रामस्य चकार कीर्त्तिमान्।

समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारदर्शनः ॥४१॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम्। रघुवरचरितं मुनिप्रणीतं दशशिरसश्च बधं निशामयध्वम् ॥ ४२॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

द्वितीयः सर्गः।

---

श्रुत्वा वस्तु समग्रं तद्धर्मार्थसहितं हितम्। व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥ १॥ उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः। प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥ २॥ रामलक्ष्मणसीताभीराज्ञा दशरथेन च। सभार्य्येण सराष्ट्रेण यत्प्राप्तं तत्र तत्त्वतः ॥ ३॥ हसितं भाषितञ्चैव गतिर्यावच्च चेष्टितम्। तत्सर्वं धर्मवीर्य्येण यथावत्संप्रपश्यति ॥ ४॥ स्त्रीतृतीयेन च तथा यत्प्राप्तं चरता वने। सत्यसन्धेन रामेण तत्सर्वञ्चान्ववेक्षत ॥ ५॥ ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः। पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा ॥ ६॥ तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महामतिः। अभिरामस्य रामस्य तत्सर्वं कर्त्तुमुद्यतः ॥७॥ कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम्। समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८॥ स यथा कथितं पूर्व्वं नारदेन महात्मना। रघुवंशस्य चरितं चकार भगवान् मुनिः ॥ ९॥ जन्म रामस्य सुमहद्वीर्य्यं सर्वानुकूलताम्। लोकस्य प्रियतां क्षान्तिः सौम्यतां सत्यशीलताम् ॥ १०॥ नानाचित्राः कथाश्चान्या विश्वामित्रसहायने। जानक्याश्च विवाहञ्च धनुषश्च विभेदनम् ॥ ११॥ रामरामविवादञ्च गुणान् दाशरथेस्तथा। तथाभिषेकं रामस्य कैकेय्या दुष्टभावनाम् ॥ १२॥

विघातश्चाभिषेकस्य रामस्य च विवासनम्। राज्ञः शोकं विला-
पञ्च परलोकस्य चाश्रयम्॥ १३॥ प्रकृतीनां विषादश्च प्रकृ-
तीनां विसर्जनम्। निषादाधिपसंवादं सूतोपावर्त्तनं तथा॥
१४॥ गङ्गायाश्चापि सन्तारं भरद्वाजस्य दर्शनम्। भरद्वाजा-
भ्यनुज्ञानाच्चित्रकूटस्य दर्शनम्॥ १५॥ वास्तुकर्मनिवेशञ्च भर-
तागमनं तथा। प्रसादनञ्च रामस्य पितुश्च सलिलक्रियाम्॥१६॥
पादुकाग्र्याभिषेकञ्च नन्दिग्रामनिवासनम्। दण्डकारण्यगमनं
विराधस्य वधं तथा॥ १७॥ दर्शनं शरभङ्गस्य सुतीक्ष्णेन
समागमम्। अनसूयासमास्याञ्च अङ्गरागस्य चार्पणम्॥ १८॥
दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा। शूर्पणखायाश्च संवादं
विरूपकरणं तथा॥ १९॥ वधं खरत्रिशिरसोरुत्थानं रावणस्य
च। मारीचस्य वधञ्चैव वैदेह्या हरणं तथा॥ २०॥ राघवस्य
विलापञ्च गृध्रराजनिवर्हणम्। कबन्धदर्शनञ्चैव फलमूलाशनं
तथा। प्रलापञ्चैव पम्पायां हनुमद्दर्शनं तथा॥ २२॥ ऋष्य-
मूकस्य गमनं सुग्रीवेण समागमम्। प्रत्ययोत्पादनं सख्यं वालि-
सुग्रीवविग्रहम्॥ २३॥ वालिप्रमथनं चैव सुग्रीवप्रतिपादनम्।
ताराविलापं समयं वर्षरात्रनिवासनम्॥ २४॥ कोपं राघव-
सिंहस्य बलानामुपसंग्रहम्। दिशः प्रस्थापनं चैव पृथिव्याश्च
निवेदनम्॥ २५॥ अंङ्गुलीयकदानञ्च ऋक्षस्य बिलदर्शनम्।
प्रायोपवेशनञ्चैव सम्पातेश्चापि दर्शनम्॥ २६॥ पर्वतारोहणं
चापि सागरस्यापि लङ्घनम्। समुद्रवचनाच्चैव मैनाकस्य च
दर्शनम्॥ २७॥ राक्षसीतर्ज्जनञ्चैव च्छायाग्राहस्य दर्शनम्।
सिंहिकायाश्च निधनं लङ्कामलयदर्शनम्॥ २८॥ रात्रौ लङ्का-
प्रवेशञ्च एकस्यापि विचिन्तनम्। आपानभूमिगमनमवरोधस्य
दर्शनम्॥ २९॥ दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम्।
अशोकवनिकायानं सीतायाश्चापि दर्शनम्॥ ३०॥ अभिज्ञान-

प्रदानञ्च सीतायाश्चापि भाषणम्। राक्षसीतर्जनञ्चैव त्रिजटास्वप्नदर्शनम्॥ ३१॥ मणिप्रदानं सीताया वृक्षभङ्गं तथैव च। राक्षसीविद्रवञ्चैव किङ्कराणां निवर्हणम्॥ ३२॥ ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम्। प्रतिप्लवनमेवाथ मधूनां हरणं तथा॥ ३३॥ राघवाश्वासनं चैवं मणिनिर्यातनं तथा। सङ्गमञ्च समुद्रेण नलसेतोश्च बन्धनम्॥ ३४॥ प्रतारञ्च समुद्रस्य रात्रौ लङ्कावरोधनम्। विभीषणेन संसर्गं बधोपायनिवेदनम्॥ ३५॥ कुम्भकर्णस्य निधनं मेघनादनिवर्हणम्। रावणस्य विनाशञ्च सीतावाप्तिमरेः पुरे॥ ३६॥ विभीषणाभिषेकञ्च पुष्पकस्य च दर्शनम्। अयोध्यायाश्च गमनं भरद्वाजसमागमम्॥ ३७॥ प्रेषणं वायुपुत्रस्य भरतेन समागमम्। रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम्॥ ३८॥ स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम्। अनागतञ्च यत्किञ्चिद्रामस्य वसुधातले। तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः॥ ३९॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

तृतीयः सर्गः।

---

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः। चकार चरितं कृत्स्नं विचित्रपदमर्थवत्॥ १॥ चतुर्विंशत् सहस्राणि श्लोकानामुक्तवानृषिः। तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम्॥ २॥ कृत्वा तु तन्महाप्राज्ञः सभविष्यं सहोत्तरम्। चिन्तयामास कोन्वेतत्प्रयुञ्जीयादिति प्रभुः॥ ३॥ तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः। अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ॥ ४॥ कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ। भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ॥ ५॥ स तु मेधा-

विज्ञौ दृष्ट्वा वेदेषु परिनिष्ठितौ । वेदोपबृंहणार्थाय तावग्रा-
हयत प्रभुः ॥ ६ ॥ काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवध इत्येवं चकार चरितव्रतः ॥ ७ ॥ पाठ्ये गेये च
मधुरं प्रमाणैस्त्रिभिरन्वितम् । जातिभिः सप्तभिर्युक्तं तन्त्रीलय
समन्वितम् ॥ ८ ॥ रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः ।
वीरादिभीरसैर्युक्तं काव्यमेतदगायताम् ॥ ९ ॥ तौ तु गान्धर्व-
तत्त्वज्ञौ स्थानमूर्च्छनकोविदौ । भ्रातरौ स्वरसम्पन्नौ गन्ध-
र्वाविव रूपिणौ ॥ १० ॥ रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ ।
बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथापरौ ॥ ११ ॥ तौ राज-
पुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् । वचोविधेयं तत् सर्वं
कृत्वा काव्यमनिन्दितौ ॥ १२ ॥ ऋषीणाञ्च द्विजातीनां साधू-
नाञ्च समागमे । यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥
१३ ॥ महात्मानौ महाभागौ सर्वलक्षणलक्षितौ । तौ कदाचित्
समेतानामृषीणां भावितात्मनाम् ॥ १४ ॥ मध्येसभं समीप-
स्थाविदं काव्यमगायताम् । तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुले-
क्षणाः ॥ १५ ॥ साधु साध्विति तावूचुः परं विस्मयमागताः । ते
प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः ॥ १६ ॥ प्रशशंसुः प्रशस्तव्यौ
गायमानौ कुशीलवौ । अहो गीतस्य माधुर्यं श्लोकानाञ्च विशे-
षतः ॥ १७ ॥ चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् । प्रविश्य
तावुभौ सुष्ठु तथा भावमगायताम् ॥ १८ ॥ सहितौ मधुरं
रक्तं सम्पन्नं स्वरसम्पदा । एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्मह-
र्षिभिः ॥ १९ ॥ संरक्ततरमत्यर्थं मधुरं तावगायताम् । प्रीतः
कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ ॥ २० ॥ प्रसन्नो
वल्कलं कश्चिद्ददौ ताभ्यां महायशाः । अन्यः कृष्णाजिनमदा-
द्यज्ञसूत्रं तथापरः ॥ २१ ॥ कश्चित् कमण्डलुं प्रादान्मौञ्जीमन्यो
महामुनिः । बृसीमन्यस्तदा प्रादात्कौपीनमपरो मुनिः ॥ २२ ॥

ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः । काषायमपरो वस्त्रञ्चीरमन्यो ददौ मुनिः ॥ २३ ॥ जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः । यज्ञभाण्डमृषिः कश्चित् काष्ठभारं तथापरः ॥ २४ ॥ औडुम्बरीं वृषीमन्यः स्वस्ति केचित्तदावदन् । आयुष-मपरे प्राहुर्मुदा तत्र महर्षयः ॥ २५ ॥ ददुश्चैवं वरान् सर्व्वे मुनयः सत्यवादिनः । आश्चर्य्यमिदमाख्यानं मुनीनां सम्प्रकी-र्त्तितम् ॥ २६ ॥ परं कवीनामाधारं समाप्तन्तु यथाक्रमम् । अभिगीतमिदं गीतं सर्व्वगीतेषु कोविदौ ॥ २७ ॥ आयुष्यं पुष्टि-जननं सर्व्वश्रुतिमनोहरम् । प्रशस्यमानौ सर्व्वत्र कदाचित्तत्र गायकौ ॥ २८ ॥ रथ्यासु राजमार्गेषु ददर्श भरताग्रजः । स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ ॥ २९ ॥ पूजयामास पूजार्हौ रामः शत्रुनिवर्हणः । आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः ॥ ३० ॥ उपोपविष्टैः सचिवैर्भ्रातृभिश्च समन्वितः । दृष्ट्वा तु रूपसम्पन्नौ विनीतौ भ्रातरावुभौ ॥ ३१ ॥ उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा । श्रूयतामेतदाख्यानमनयो-र्देववर्च्चसोः ॥ ३२ ॥ विचित्रार्थपदं सम्यक् गायकौ समचोदयत् । तौ चापि मधुरं रक्तं स्वचित्तायतनिस्वनम् ॥ ३३ ॥ तन्त्रीलय-वदत्यर्थं विश्रुतार्थमगायताम् । ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च ॥ ३४ ॥ श्रोत्राश्रयसुखं गेयं तदभौ जनसंसदि । इमौ मुनीनिपार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ । ममापि तद्भूतिकरं प्रचक्षते महानुभावं चरितं निबोधत ॥ ३५ ॥ ततः सुतौ रामवचःप्रचोदितावगायतां मार्गविधानसम्पदा । स चापि रामः परिषद्गतः शनैर्बभूषयासक्तमना बभूव ह ॥ ३६ ॥

इत्यार्षे रामायणे बालकाण्डे

चतुर्थः सर्गः ।

---

सर्वापूर्वमियं येषामासीत् कृत्स्ना वसुन्धरा। प्रजापति-
मुपादाय नृपाणां जयशालिनाम्। येषां स सगरो नाम सागरो
येन खानितः। षष्टिपुत्रसहस्राणि यं यान्तं पर्य्यवारयत् ॥ २ ॥
इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम्। महदुत्पन्नमा-
ख्यानं रामायणमिति श्रुतम् ॥ ३ ॥ तदिदं वर्त्तयिष्यावः सर्वं
निखिलमादितः। धर्मकामार्थसहितं श्रोतव्यमनसूयता ॥ ४ ॥
कोशलो नाम मुदितः स्फीतो जनपदो महान्। निविष्टः सरयू-
तीरे प्रभूतधनधान्यवान् ॥ ५ ॥ अयोध्या नाम नगरी तत्रा-
सील्लोकविश्रुता। मनुनाम्ना नरेन्द्रेण या पुरी निर्मिता स्वयम् ॥
६ ॥ आयता दश च द्वे च योजनानि महापुरी। श्रीमती
त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७॥ राजमार्गेण महता
सुविभक्तेन शोभिता। मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः
॥ ८ ॥ तां तु राजा दशरथो महाराष्ट्रविवर्द्धनः। पुरीमावास-
यामास दिवि देवपतिर्यथा ॥ ९ ॥ कपाटतोरणवतीं सुवि-
भक्तान्तरायणाम्। सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः ॥
१० ॥ सूतमागधसम्बाधां श्रीमतीमतुलप्रभाम्। उच्चाट्टाल-
ध्वजवतीं शतघ्नीशतसङ्कुलाम् ॥ ११ । बधूनाटकसंघैश्च संयुक्तां
सर्वतः पुरीं। उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥१२॥
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम्। वाजिवारणसम्पूर्णां
गोभिरुष्ट्रैः खरैस्तथा ॥ १३ ॥ सामन्तराजसङ्घैश्च वलिकर्मभि-
रावृताम्। नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४ ॥
प्रासादैरत्नविकृतैः पर्वतैरिव शोभिताम्। कूटागारैश्च सम्पूर्णा-
मिन्द्रस्येवामरावतीम् ॥ १५ ॥ चित्रामष्टापदाकारां वरनारी-
गणायुताम्। सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६ ॥
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम्। शालितण्डु-
लसम्पूर्णामिक्षुकाण्डरसोदकाम् ॥ १७ ॥ दुन्दुभिभिर्मृदङ्गैश्च

नीषाभिः पद्मवैस्तथा। मार्दितां भ्रममत्यर्थं पृथिव्यां तामनु-
त्तमाम् ॥ १८ ॥ विमानमिव सिद्धानां तपसाधिगतं दिवि।
सुनिवेशितवेश्मानां नरोत्तमसमावृताम् ॥ १९ ॥ ये च बाणैर्न वि-
ध्यन्ति विविक्तमपरापरम्। शब्दवेध्यञ्च विततं लघुहस्ता विशा-
रदाः ॥ २० ॥ सिंहव्याघ्रवराहाणां मत्तानां नदतां वने।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २१ ॥ तादृशानां
सहस्रैस्तामभिपूर्णां महारथैः। पुरीमावासयामास राजा दश-
रथस्तदा ॥ २२ ॥ तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेद-
षडङ्गपारगैः। सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैः ऋषि-
भिश्च केवलैः ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे
पञ्चमः सर्गः।

---

तस्यां पूर्य्यामयोध्यायां वेदवित् सर्व्वसंग्रहः। दीर्घदर्शी
महातेजाः पौरजानपदप्रियः ॥ १ ॥ इक्ष्वाकूणामतिरथो
यज्वा धर्मपरो वशी। महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः
॥ २ ॥ बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः। धनैश्च
सञ्चयैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३ ॥ यथा मनुर्महातेजा लो-
कस्य परिरक्षिता। तथा दशरथो राजा लोकस्य परिरक्षिता
॥ ४ ॥ तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता। पालिता सा
पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५ ॥ तस्मिन् पुरवरे हृष्टा
धर्मात्मानो बहुश्रुताः। नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्य-
वादिनः ॥ ६ ॥ नाल्पसन्निचयः कश्चिदासीत्तस्मिन् पुरोत्तमे।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्व धनधान्यवान् ॥ ७ ॥ कामी
वा न कदर्यो वा नृशंसः पुरुषः क्वचित्। द्रष्टुं शक्यमयोध्यायां

नाविद्वान्न च नास्तिकः॥ ८॥ सर्वे नराश्च नार्य्यश्च धर्मशीलाः
सुसंयताः। मुदिता शीलवृत्ताभ्यां महर्षय इवामलाः॥ ९॥
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान्। नामृष्टो न न-
लिप्ताङ्गो नासुगन्धश्च विद्यते॥ १०॥ नामृष्टभोजी नादाता
नाप्यनङ्गदनिष्कधृक्। नाहस्ताभरणो वापि दृश्यते नाप्यनात्म-
वान्॥ ११॥ नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः। कश्चि-
दासीदयोध्यायां न चावृत्तो न सङ्करः॥ १२॥ स्वकर्मनिरता
नित्यं ब्राह्मणा विजितेन्द्रियाः। दानाध्ययनशीलाश्च संयताश्च
प्रतिग्रहे॥ १३॥ नास्तिको नानृतो वापि न कश्चिदबहुश्रुतः।
नासूयको न चाशक्तो नाविद्वान्विद्यते क्वचित्॥ १४॥ नाषडङ्ग-
विदत्रास्ति नाव्रतो न सहस्रदः। न दीनः क्षिप्तचित्तो वा व्य-
थितो वापि कश्चन॥ १५॥ कश्चिन्नरो वा नारी वा नाश्रीमा-
न्नाप्यरूपवान्। द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान्॥
१६॥ वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः। कृतज्ञाश्च वदा-
न्याश्च शूरा विक्रमसंयुताः॥ १७॥ दीर्घायुषो नराः सर्वे धर्मं
सत्यञ्च संश्रिताः। सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे
॥ १८॥ क्षत्रं ब्रह्ममुखं चासीद्वैश्याः क्षत्रमनुव्रताः। शूद्राः
स्वकर्मनिरतास्त्रीन्वर्णानुपचारिणः॥ १९॥ सा तेनेक्ष्वाकु-
नाथेन पुरी सुपरिरक्षिता। यथा पुरस्तान्मनुना मानवेन्द्रेण धी-
मता॥ २०॥ योधानामग्निकल्पानां पेशलानाममर्षिणाम्।
सम्पूर्णाकृतविद्यानां गुहा केशरिणामिव॥ २१॥ काम्बोजविषये
जातैर्वाह्लीकैश्च हयोत्तमैः॥ २२॥ विन्ध्यपर्वतजैर्मत्तैः पूर्णा
हैमवतैरपि। मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः॥ २३॥
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा। अञ्जनादपि निष्क्रान्तै-
र्वामनादपि च द्विपैः॥ २४॥ भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगै-
स्तथा। भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी॥ २५॥ नित्य-

मत्तैः सदा पूर्णा नागैरचलसन्निभैः । सा योजने द्वे च भूयः
सत्यनामा प्रकाशते ॥ २६ ॥ तां पुरीं स महातेजा राजा दश-
रथो महान् । शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः ॥२७॥
तां सत्यनामां दृढतोरणार्गलां गृहैर्विचित्रैरुपशोभितां शिवाम् ।
पुरीमयोध्यां नृसहस्रसंकुलां शशास वै शक्रसमो महीपतिः ॥२८॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

षष्ठः सर्गः ।

---

तस्यामात्या गुणैरासन्निक्ष्वाकोः सुमहात्मनः । मन्त्रज्ञाश्चेङ्गि-
तज्ञाश्च नित्यं प्रियहिते रताः ॥ १ ॥ अष्टौ बभूवुर्वीरस्य तस्या-
मात्या यशस्विनः । शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥२॥
धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्द्धनः । अकोपो धर्मपालश्च
सुमन्त्रश्चाष्टमोऽर्थवित् ॥ ३ ॥ ऋत्विजौ द्वावभिमतौ तस्यास्ता-
मृषिसत्तमौ । वशिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे ॥ ४
सुयज्ञोऽप्यथ जाबालिः काश्यपोऽप्यथ गौतमः । मार्कण्डेयस्तु
दीर्घायुस्तथा कात्यायनो द्विजः ॥ ५ ॥ एतैर्ब्रह्मर्षिभिर्नित्यमृ-
त्विजस्तस्य पौर्वकाः । विद्याविनीता ह्रीमन्तः कुशला नियते-
न्द्रियाः ॥ ६ ॥ श्रीमन्तश्च महात्मानः शस्त्रज्ञा दृढविक्रमाः ।
कीर्त्तिमन्तः प्रणिहिता यथावचनकारिणः ॥ ७ ॥ तेजःक्षमा-
यशःप्राप्ताः स्मितपूर्वाभिभाषिणः । क्रोधकामार्थहेतोर्वा न
ब्रूयुरनृतं वचः ॥ ८ ॥ तेषामविदितं किञ्चित् स्वेषु नास्ति परेषु
वा । क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम् ॥ ९ ॥
कुशला व्यवहारेषु सौहृदेषु परीक्षिताः । प्राप्तकालं यथा दण्डं
धारयेयुः सुतेष्वपि ॥ १० ॥ कोशसंग्रहणे युक्ता बलस्य च परि-

यक्के । अक्षितं चापि पुरुषं न क्षिंस्युरविदूषकम् ॥ ११ ॥ वी-
राश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः । शुचीनां रक्षितारश्च
नित्यं विषयवासिनाम् ॥ १२ ॥ ब्रह्मक्षत्रमहिंसन्तास्ते कोशं सम-
पूरयन् । सुतीक्ष्णदण्डाः संप्रेक्ष्य पुरुषस्य बलाबलम् ॥ १३ ॥
शुचीनामेकबुद्धीनां सर्वेषां सम्प्रजानताम् । नासीत्पुरे वा राष्ट्रे वा
मृषावादी नरः क्वचित् ॥ १४ ॥ कश्चिन्न दुष्टस्तत्रासीत् परदाररति-
र्नरः । प्रशान्तं सर्व्वमेवासीद्राष्ट्रं पुरवरञ्च तत् ॥ १५ ॥ सुवा-
ससः सुवेषाश्च ते च सर्वे शुचिव्रताः । हितार्थाश्च नरेन्द्रस्य
जाग्रतो नयचक्षुषा ॥ १६ ॥ गुरोर्गुणगृहीताश्च प्रख्याताश्च
पराक्रमैः । विदेशेष्वपि विज्ञाताः सर्व्वतो बुद्धिनिश्चयाः ॥१७॥
अभितो गुणवन्तश्च न चासन् गुणवर्ज्जिताः । सन्धिविग्रह-
तत्त्वज्ञाः प्रकृत्या सम्पदान्विताः ॥ १८ ॥ मन्त्रसम्बरणे शक्ताः
शक्ताः सूक्ष्मासु बुद्धिषु । नीतिशास्त्रविशेषज्ञाः सततं प्रिय-
वादिनः ॥ १९ ॥ ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः । उप-
पन्नो गुणोपेतैरन्वशासद्वसुन्धराम् ॥ २० ॥ अवेक्ष्यमाणश्चारेण
प्रजाधर्मेण रक्षयन् । प्रजानां पालनं कुर्व्वन्न धर्मं परिवर्जयन्
॥ २१ ॥ विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसङ्गरः । स तत्र
पुरुषव्याघ्रः शशास पृथिवीमिमाम् ॥ २२ ॥ नाध्यगच्छद्विशिष्टं
वा तुल्यं वा शत्रुमात्मनः । मित्रवान्नतसामन्तः प्रतापहत-
कण्टकः । स शशास जगद्राजा दिवि देवपतिर्यथा ॥ २३ ॥ तै-
र्मन्त्रिभिर्मन्त्रहिते निविष्टैर्वृतोऽनुरक्तैः कुशलैः समर्थैः । स
पार्थिवो दीप्तिमवाप युक्तस्तेजोमयैर्गोभिरिवोदितोऽर्कः ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

सप्तमः सर्गः ।

---

तस्य चैवंप्रभावस्य धर्मज्ञस्य महात्मनः। सुतार्थं तप्यमानस्य नासीद्वंशकरः सुतः॥ १॥ चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः। सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहम्॥ २॥ स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान्। मन्त्रिभिः सह धर्मात्मा सर्वैरपि कृतात्मभिः॥ ३॥ ततोऽब्रवीन्महातेजाः सुमन्त्रं मन्त्रिसत्तमम्। शीघ्रमानय मे सर्व्वान् गुरूंस्तान् सपुरोहितान्॥ ४॥ ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः। समानयत् स तान् सर्व्वान् समस्तान्वेदपारगान्॥ ५॥ सुयज्ञं वामदेवञ्च जाबालिमथ काश्यपम्। पुरोहितं वशिष्ठञ्च ये चान्ये द्विजसत्तमाः॥ ६॥ तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा। इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत्॥ ७॥ मम लालप्यमानस्य सुतार्थं नास्ति वै सुखम्। तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम॥ ८॥ तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा। कथं प्राप्स्याम्यहं कामं बुद्धिरत्र विचिन्त्यताम्॥ ९॥ ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन्। वशिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम्॥ १०॥ ऊचुश्च परमप्रीताः सर्वे दशरथं वचः। सम्भाराः संभ्रियन्तान्ते तुरगश्च विमुच्यताम्॥ ११॥ सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्। सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव॥ १२॥ यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता। ततस्तुष्टोऽभवद्राजा श्रुत्वैतत् द्विजभाषितम्॥ १३॥ अमात्यानब्रवीद्राजा हर्षव्याकुललोचनः। सम्भाराः संभ्रियन्तां मे गुरूणां वचनादिह॥ १४॥ समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम्। सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्॥ १५॥ शान्तयश्चापि वर्धन्तां यथाकल्पं यथाविधि। शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता॥ १६॥ नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे। छिद्रं हि मृगयन्ते स्म विद्वांसो

ब्रह्मराक्षसाः ॥ १७ ॥ विधिहीनस्य यज्ञस्य सद्यः कर्त्ता विनश्यति । तद्यथा विधिपूर्व्वं मे क्रतुरेषः समाप्यते ॥ १८ ॥ तथा विधानं क्रियतां समर्थाः करणेष्विति । तथेति चाब्रुवन् सर्व्वे मन्त्रिणः प्रतिपूजिताः ॥ १९ ॥ पार्थिवेन्द्रस्य तद्वाक्यं यथापूर्वं निशम्य ते । तथा द्विजास्ते धर्मज्ञा वर्द्धयन्तो नृपोत्तमम् ॥ २० ॥ अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम् । विसर्जयित्वा तान्विप्रान् सचिवानिदमब्रवीत् ॥ २१ ॥ ऋत्विग्भिरुपसन्दिष्टो यथावत् क्रतुराप्यताम् । इत्युक्त्वा नृपशार्दूलः सचिवान् समुपस्थितान् ॥ २२ ॥ विसर्ज्जयित्वा स्वं वेश्म प्रविवेश महामतिः । ततः स गत्वा ताः पत्नीर्नरेन्द्रो हृदयङ्गमाः ॥२३॥ उवाच दीक्षां विशत यक्ष्येऽहं सुतकारणात् । तासां तेनातिकान्तेन वचनेन सुवर्च्चसाम् ॥२४॥ मुखपद्मान्यशोभन्त पद्मानीव हिमात्यये ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

अष्टमः सर्गः ।

---

एतत् श्रुत्वा रहः सूतो राजानमिदमब्रवीत् । श्रूयतां यत् पुरावृत्तं पुराणे च मया श्रुतम् ॥ १ ॥ ऋत्विग्भिरुपदिष्टोऽयं पुरावृत्तो मया श्रुतः । सनत्कुमारो भगवान् पूर्वं कथितवान् कथाम् ॥ २ ॥ ऋषीणां सन्निधौ राजंस्तव पुत्रागमं प्रति काश्यपस्य च पुत्रोऽस्ति विभाण्डक इति श्रुतः ॥ ३॥ ऋष्यशृङ्ग इति ख्यातस्तस्य पुत्रो भविष्यति । स वने नित्यसंवृद्धो मुनिर्वनचरः सदा ॥ ४ ॥ नान्यं जानाति विप्रेन्द्रो नित्यं पित्रनुवर्त्तनात् द्वैविध्यं ब्रह्मचर्य्यस्य भविष्यति महात्मनः ॥ ५ ॥ लोकेषु प्रथितं राजन् विप्रैश्च कथितं सदा । तस्यैवं वर्त्तमानस्य कालः समभिवर्त्तत ॥ ६ ॥ अग्निं शुश्रूषमाणस्य पितरञ्च यशस्विनम् । एत-

स्मिन्नेव काले तु रोमपादः प्रतापवान् ॥ ७ ॥ अङ्गेषु प्रथितो
राजा भविष्यति महाबलः। तस्य व्यतिक्रमाद्राज्ञो भविष्यति
सुदारुणा ॥ ८ ॥ अनावृष्टिः सुघोरा वै सर्व्वलोकभयावहा।
अनावृष्ट्यान्तु वृत्तायां राजा दुःखसमन्वितः ॥ ९ ॥ ब्राह्मणान्
श्रुतसंवृद्धान् समानीय प्रवक्ष्यति। भवन्तः श्रुतकर्म्माणो लोक-
चारित्रवेदिनः ॥ १० ॥ समादिशन्तु नियमं प्रायश्चित्तं यथा
भवेत्। इत्युक्तास्ते ततो राज्ञा सर्व्वब्राह्मणसत्तमाः ॥ ११ ॥
वक्ष्यन्ति ते महीपालं ब्राह्मणा वेदपारगाः। विभाण्डकसुतं
राजन् सर्व्वोपायैरिहानय ॥ १२ ॥ आनाय्य तु महीपाल ऋष्य-
शृङ्गं सुसत्कृतम्। विभाण्डकसुतं राजन् ब्राह्मणं वेदपारगम्
॥ १३ ॥ प्रयच्छ कन्यां शान्तां वै विधिना सु समाहितः।
तेषान्तु वचनं श्रुत्वा राजा चिन्तां प्रपत्स्यते ॥ १४ ॥ केनोपायेन
वै शक्यमिहानेतुं स वीर्य्यवान् ॥ १५ ॥ ततो राजा विनिश्चित्य
सह मन्त्रिभिरात्मवान्। पुरोहितममात्यांश्च प्रेषयिष्यति सत्-
कृतान् ॥ १६ ॥ ते तु राज्ञो वचो श्रुत्वा व्यथितावनताननाः।
न गच्छेम ऋषेर्भीता अनुनेष्यन्ति तं नृपम् ॥ १७ ॥ वक्ष्यन्ति
चिन्तयित्वा ते तस्योपायांश्च तान् क्षमान्। आनेष्यामो वयं विप्रं
न च दोषो भविष्यति ॥ १८ ॥ एवमङ्गाधिपेनैव गणिकाभि
ऋषेः सुतः। आनीतोऽवर्षयद्देवः शान्ता चास्मै प्रदीयते ॥ १९ ॥
ऋष्यशृङ्गस्तु जामाता पुत्रांस्तव विधास्यति। सनत्कुमारकथित-
मेतावद्व्याहृतं मया ॥ २० ॥ अथ हृष्टो दशरथः सुमन्त्रं प्रत्य-
भाषत। यथर्ष्यशृङ्गस्त्वानीतो येनोपायेन सोच्यताम् ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे
नवमः सर्गः।

सुमन्त्रेणोदितो राजा प्रोवाचेदं वचस्तदा । यथ ऋष्यशृङ्ग-स्त्वानीतो येनोपायेन मन्त्रिभिः । तन्मे निगदितं सर्वं शृणु मे मन्त्रिभिः सह ॥ १ ॥ लोमपादमुवाचेदं सहामात्यपुरोहितस्तः । निरपायोऽयमस्माभि रभिचिन्तितः ॥ २ ऋषपुत्त्रो वनचरस्तपःस्वाध्यायसंयुतः । अनभिज्ञस्तु नारीणां उपायो विषयाणां सुखस्य च ॥ ३ ॥ इन्द्रियार्थैरभिमतैर्नरचित्तप्रमाथिभिः । पुरमानाययिष्यामः क्षिप्रञ्चाध्यवसीयताम् ॥ ४ ॥ गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलङ्कृताः । प्रलोभ्य विविधोपायैरानेष्यन्तीह सत्कृताः ॥ ५ ॥ श्रुत्वा तथेति राजा च प्रत्युवाच पुरोहितम् । पुरोहितं मन्त्रिणश्च तदा चक्रुश्च ते तथा ॥ ६ ॥ वारमुख्यास्तु तच्छ्रुत्वा वनं प्रविविशुर्महत् । आश्रमस्याविदूरेऽस्मिन् यत्नं कुर्व्वन्ति दर्शने ॥ ७ ॥ ऋषेः पुत्रस्य धीरस्य नित्यमाश्रमवा- सिनः पितुः स नित्यसन्तुष्टो नातिचक्राम चाश्रमात् ॥ ८ ॥ न तेन जन्मप्रभृति दृष्टपूर्वं तपस्विना । स्त्री वा पुमान्वा यच्चान्यत्सत्त्वं नगरराष्ट्रजम् ॥ ९ ॥ ततः कदाचित्तं देशमाज गाम यदृच्छया । विभाण्डकसुतस्तत्र ताश्चापश्यद्वराङ्गनाः ॥ १० ॥ ताश्चित्रवेषाः प्रमदा गायन्त्यो मधुरस्वरम् । ऋषिपुत्रमुपागम्य सर्वा वचनमब्रुवन् ॥ ११ ॥ कस्त्वं किं वर्त्तसे ब्रह्मन् ज्ञातुमिच्छामहे वयम् । एकस्त्वं विजने दूरे वने चरसि शंस नः ॥ १२ ॥ अदृष्टरूपास्तास्तेन काम्यरूपा वने स्त्रियः । हार्दात्तस्य मतिर्जाता आख्यातुं पितरं स्वकम् ॥ १३ ॥ पिता विभाण्डकोऽस्माकं तस्याहं सुत औरसः ऋष्यशृङ्ग इति ख्यातं नाम कर्म च मे भुवि ॥ १४ ॥ इहाश्रमपदोऽस्माकं समीपे शुभदर्शनाः । करिष्ये वोऽत्र पूजां वै सर्वेषां विधिपूर्व्वकम् ॥ १५ ॥ ऋषिपुत्रवचः श्रुत्वा सर्व्वासां मतिरास वै । तदाश्रमपदं द्रष्टुं

अगमुः सर्व्वास्ततोऽङ्गनाः ॥ १६ ॥ गतानान्तु ततः पूजामृषि-
पुत्रश्चकार ह । इदमर्घ्यमिदं पाद्यमिदं मूलं फलञ्च नः ॥ १७ ॥
प्रतिगृह्य तु तां पूजां सर्वा एव समुत्सुकाः । ऋषेर्भीताश्च
शीघ्रन्तु गमनाय मतिं दधुः ॥ १८ ॥ अस्माकमपि मुख्यानि
फलानीमानि हे द्विज । गृहाण विप्र भद्रन्ते भक्षयस्व च माचि-
रम् ॥ १९ ॥ ततस्तास्तं समालिङ्ग्य सर्वा हर्षसमन्विताः ।
मोदकान् प्रददुस्तस्मै भक्ष्यांश्च विविधान् शुभान् ॥ २० ॥ तानि
चास्वाद्य तेजस्वी फलानीति स्म मन्यते । अनास्वादितपूर्वाणि
वने नित्यनिवासिनाम् ॥ २१ ॥ आपृच्छ्य च तदा विप्रं व्रत-
चर्य्यां निवेद्य च । गच्छन्ति स्मापदेशात्ता भीतास्तस्य पितुः
स्त्रियः ॥ २२ ॥ गतासु तासु सर्वासु काश्यपस्यात्मजो द्विजः ।
अस्वस्थहृदयश्चासीत् दुःखाय परिवर्त्तते ॥ २३ ॥ ततोऽपरे-
द्युस्तं देशमाजगाम स वीर्य्यवान् । विभाण्डकसुतः श्रीमान्
मनसा चिन्तयन्मुहुः ॥ २४ ॥ मनोज्ञा यत्र ता दृष्टा वारमुख्याः
स्वलङ्कृताः । दृष्ट्वैव च ततो विप्रमायान्तं हृष्टमानसाः ॥ २५ ॥
उपसृत्य ततः सर्वास्तास्तमूचुरिदं वचः । एह्याश्रमपदं सौम्य
अस्माकमिति चाब्रुवन् ॥ २६ ॥ चित्राण्यत्र बहूनि स्युर्मूलानि च
फलानि च । तत्राप्येष विशेषेण विधिर्हि भविता ध्रुवम् ॥२७ ।
श्रुत्वा तु वचनं तासां सर्व्वासां हृदयङ्गमम् । गमनाय मतिं चक्रे
तञ्च निन्युस्तथा स्त्रियः ॥ २८ ॥ तत्र चानीयमाने तु विप्रे त-
स्मिन् महात्मनि । ववर्ष सहसा देवो जगत्प्रह्लादयंस्तदा ॥२९॥
वर्षेणैव गतं विप्रं विषयं स नराधिपः । प्रत्युद्गम्य मुनिं प्रह्वः
शिरसा च महीं गतः ॥ ३० ॥ अर्घञ्च प्रददौ तस्मै न्यायतः
सुसमाहितः । वव्रे प्रसादं विप्रेन्द्रात् माविप्रं मन्युराविशेत् ॥३१॥
अन्तःपुरं प्रवेश्यास्मै कन्यां दत्वा यथाविधि । शान्तां शान्तेन
मनसा राजा हर्षमवाप सः ॥ ३२ ॥ एवं स न्यवसत्तत्र

सर्वकामैः सुपूजितः। ऋष्यशृङ्गो महातेजाः शान्तया सह भार्य्यया॥ २३॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे
दशमः सर्गः।

---

भूय एवाह राजेन्द्र शृणु मे वचनं हितम्। यथा स
देवप्रवरः कथयामास बुद्धिमान्॥ १॥ इक्ष्वाकूणां कुले
जातो भविष्यति सुधार्मिकः। नाम्ना दशरथो राजा श्रीमान्
सत्यप्रतिश्रवाः॥ २॥ अङ्गराजेन सख्यञ्च तस्य राज्ञो भवि-
ष्यति। कन्या चास्य महाभागा शान्ता नाम भविष्यति॥ ३॥
पुत्त्रस्त्वङ्गस्य राज्ञस्तु रोमपाद इति श्रुतः। तं स राजा दश-
रथो गमिष्यति महायशाः॥ ४॥ अनपत्योऽस्मि धर्मात्मन्
शान्ताभर्त्ता मम क्रतुम्। आहरेत त्वयाज्ञप्तः सन्तानार्थं
कुलस्य च॥ ५॥ श्रुत्वा राज्ञोऽथ तद् वाक्यं मनसा च वि-
चिन्त्य स। प्रदास्यते पुत्त्रवन्तं शान्ताभर्त्तारमात्मवान्॥ ६॥
प्रतिगृह्य च तं विप्रं स राजा विगतज्वरः। आहरिष्यति तं
यज्ञं प्रहृष्टेनान्तरात्मना॥ ७॥ तञ्च राजा दशरथो यश-
स्कामः कृताञ्जलिः। ऋष्यशृङ्गं द्विजश्रेष्ठं वरयिष्यति धर्म-
वित्॥ ८॥ यज्ञार्थं प्रसवार्थञ्च स्वर्गार्थञ्च नरेश्वरः। लभते
च स तं कामं द्विजमुख्याद्विशाम्पतिः॥ ९॥ पुत्राश्चास्य
भविष्यन्ति चत्वारोऽमितविक्रमाः। वंशप्रतिष्ठानकराः सर्वभूतेषु
विश्रुताः॥ १०॥ एवं स देवप्रवरः पूर्व्वं कथितवान् कथाम्।
सनत्कुमारो भगवान् पुरा देवयुगे प्रभुः॥ ११॥ स त्वं पुरुष-
शार्दूल समानय सुसत्कृतम्। स्वयमेव महाराज गत्वा

सबलवाहनः ॥ १२ ॥ सुमन्त्रस्य वचः श्रुत्वा हृष्टो दशरथोऽभ-
वत् । अनुमान्य वशिष्ठञ्च सूतवाक्यं निशाम्य च ॥ १३ ॥
सान्तःपुरः सहामात्यः प्रययौ यत्र स द्विजः । वनानि सरित-
श्चैव व्यतिक्रम्य शनैः शनैः ॥ १४ ॥ अभिचक्राम तं देशं यत्र वै
मुनिपुङ्गवः । आसाद्य तं द्विजश्रेष्ठं रोमपादसमीपगम् ॥ १५ ॥
ऋषिपुत्रं ददर्शाथ दीप्यमानमिवानलम् । ततो राजा यथा-
न्यायं पूजां चक्रे विशेषतः ॥ १६ ॥ सखित्वात् तस्य वै राज्ञः
प्रहृष्टेनान्तरात्मना । रोमपादेन चाख्यातम् ऋषिपुत्राय
धीमते ॥ १७ ॥ सख्यं सम्बन्धकञ्चैव तदा तं प्रत्यपूजयत् । एवं
सुसत्कृतस्तेन सहोषित्वा नरर्षभः ॥ १८ ॥ सप्ताष्ट दिवसान्
राजा राजानमिदमब्रवीत् । शान्ता तव सुता राजन् सह
भर्त्रा विशाम्पते ॥ १९ ॥ मदीयं नगरं यातु कार्य्यं हि महद्-
द्युतम् । तथेति राजा संश्रुत्य गमनं तस्य धीमतः ॥ २० ॥
उवाच वचनं विप्रं गच्छ त्वं सह भार्य्यया । ऋषिपुत्रः प्रतिश्रुत्य
तथेत्याह नृपं तदा ॥ २१ ॥ स नृपेणाभ्यनुज्ञातः प्रययौ सह
भार्य्यया । तावन्योन्याञ्जलिं कृत्वा स्नेहात् संश्लिष्य चोरसा ॥ २२ ॥
ननन्दतुर्दशरथो रोमपादश्च वीर्य्यवान् । ततः सुहृदमापृच्छ्य
प्रस्थितो रघुनन्दनः ॥ २३ ॥ पौरेषु प्रेषयामास दूतान् वै शीघ्र-
गामिनः । क्रियतां नगरं सर्वं क्षिप्रमेव स्वलङ्कृतम् ॥ २४ ॥
धूपितं सिक्तसंमृष्टं पताकाभिरलङ्कृतम् ॥ ततः प्रहृष्टाः पौरास्ते
श्रुत्वा राजानमागतम् ॥ २५ ॥ तथा चक्रुश्च तत् सर्व्वं राज्ञा
यत् प्रेषितं तदा । ततः स्वलङ्कृतं राजा नगरं प्रविवेश ह ॥
२६ ॥ शंखदुन्दुभिनिर्ह्रादैः पुरस्कृत्य द्विजर्षभम् । ततः प्रमु-
दिताः सर्व्वे दृष्ट्वा वै नागरा द्विजम् ॥ २७ ॥ प्रवेश्यमानं सत्कृत्य
नरेन्द्रेणेन्द्रकर्म्मणा । यथा दिवि सुरेन्द्रेण सहस्राक्षेण
काश्यपम् ॥ २८ ॥ अन्तःपुरं प्रवेश्यैनं पूजां कृत्वा च शास्त्रतः ।

कृतकृत्यं तदात्मानं मेने तस्योपवाहनात् ॥ २९ ॥ अन्तःपुराणि सर्व्वाणि शान्तां दृष्ट्वा तथागताम् । सह भर्त्रा विशालाक्षीं प्रीत्यानन्दमुपागमन् ॥ ३० ॥ पूज्यमाना तु ताभिः सा राज्ञा चैव विशेषतः । उवास तत्र सुखिता कञ्चित् कालं सह-द्विजा ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

एकादशः सर्गः ॥

---

ततः काले बहुतिथे कस्मिंश्चित् सुमनोहरे । वसन्ते समनुप्राप्ते राज्ञो यष्टुं मनोऽभवत् ॥ १ ॥ ततः प्रणम्य शिरसा तं विप्रं देववर्णिनम् । यज्ञाय वरयामास सन्तानार्थं कुलस्य च ॥ २ ॥ तथेति च स राजानमुवाच वसुधाधिपम् । सम्भाराः सम्भ्रियन्तां ते तुरगश्च विमुच्यताम् ॥ ३ ॥ सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । ततोऽब्रवीन्नृपो वाक्यं ब्राह्मणान् वेदपारगान् ॥ ४ ॥ सुमन्त्रावाहय क्षिप्रम् ऋत्विजो ब्रह्मवादिनः । सुयज्ञं वामदेवञ्च जावालिमथ काश्यपम् ॥ ५ ॥ पुरोहितं वसिष्ठञ्च ये चान्ये द्विजसत्तमाः । ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः ॥ ६ ॥ समानयत् स तान् सर्वान् समस्तान् वेदपारगान् । तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा ॥ ७ ॥ धर्मार्थसहितं युक्तं श्लक्ष्णं वचनमब्रवीत् । मम तातप्यमानस्य पुत्रार्थं नास्ति वै सुखम् ॥ ८ ॥ एतार्थं हयमेधेन यक्ष्यामीति मतिर्मम । तदहं यष्टुमिच्छामि हयमेधेन कर्मणा ॥ ९ ॥ ऋषिपुत्रप्रभावेन कामान् प्राप्स्यामि चाप्यहम् । ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन् ॥ १० ॥ वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखाच्छ्रुतम् । ऋष्यशृङ्गपुरोगाश्च

प्रत्यूचुर्नृपतिं तदा ॥ ११ ॥ सम्भाराः संभ्रियन्तां ते तुरगश्च
विमुच्यताम् । सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् ॥१२॥
सर्वथा प्राप्स्यते पुत्रांश्चत्वारोऽमितविक्रमान् । यस्य ते धार्मिकी
बुद्धिरियं पुत्रार्थमागता ॥ १३ ॥ ततः प्रीतोऽभवद्राजा श्रुत्वा
तु द्विजभाषितम् । अमात्यानब्रवीद्राजा हर्षेणेदं शुभाक्षरम् ॥
१४ ॥ गुरूणां वचनाच्छीघ्रं सम्भाराः संभ्रियन्तु मे । सम-
र्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ॥ १५ ॥ सरय्वा-
श्चोत्तरे तीरे यज्ञभूमिर्विधीयताम् । शान्तयश्चाभिवर्द्धन्तां यथा-
कल्पं यथाविधि ॥ १६ ॥ शक्यः कर्तुमयं यज्ञः सर्वेणापि
महीक्षिता । नापराधो भवेत् कष्टो यद्यस्मिन् क्रतुसत्तमे ॥१७॥
छिद्रं हि मृगयन्त्येते विद्वांसो ब्रह्मराक्षसाः । विधिहीनस्य
यज्ञस्य सद्यः कर्त्ता विनश्यति ॥ १८ ॥ तद्यथा विधिपूर्वं मे
क्रतुरेषः समाप्यते । तथाविधानं क्रियतां समर्थाः करणेष्विह ॥
१९ ॥ तथेति च ततः सर्वे मन्त्रिणः प्रत्यपूजयन् । पार्थि-
वेन्द्रस्य तद्वाक्यं यथाज्ञप्तमकुर्व्वत ॥ २० ॥ ततो द्विजास्ते
धर्मज्ञमस्तुवन् पार्थिवर्षभम् । अनुज्ञातास्ततः सर्वे पुनर्जग्मु-
र्यथागतम् ॥ २१ ॥ गतानां तेषु विप्रेषु मन्त्रिणस्तान् नराधिपः ।
विसर्जयित्वा स्वं वेश्म प्रविवेश महामतिः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये बालकाण्डे

द्वादशः सर्गः ।

---

पुनः प्राप्ते वसन्ते तु पूर्णः सम्वत्सरोऽभवत् । प्रसवार्थं
गतो यष्टुं हयमेधेन वीर्य्यवान् ॥ १ ॥ अभिवाद्य वशिष्ठञ्च न्या-
यतः प्रतिपूज्य च । अब्रवीत् प्रश्रितं वाक्यं प्रसवार्थं द्विजो-
त्तमम् ॥ २ ॥ यज्ञो मे क्रियतां ब्रह्मन् यथोक्तं मुनिपुङ्गव ।

यथा न विघ्नाः क्रियन्ते यज्ञाङ्गेषु विधीयताम् ॥ ३ ॥ भवान्
स्निग्धः सुहृन्मह्यं गुरुश्च परमो महान् । वोढव्यो भवता चैव
भारो यज्ञस्य चोद्यतः ॥ ४ ॥ तथेति च स राजानमब्रवीत् द्विज-
सत्तमः । करिष्ये सर्वमेवैतद्भवता यत् समर्थितम् ॥ ५ ॥
ततोऽब्रवीत् द्विजान् वृद्धान् यज्ञकर्मसु निष्ठितान् । स्थापत्ये
निष्ठितांश्चैव वृद्धान् परमधार्मिकान् ॥ ६ ॥ कर्मान्तिकान् शिल्प-
करान् वर्द्धकीन् खनकानपि । गणकान् शिल्पिनश्चैव तथैव
नटनर्त्तकान् ॥ ७ ॥ तथा शुचीन् शास्त्रविदः पुरुषान् सुबहु-
श्रुतान् । यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ॥ ८ ॥
इष्टका बहुसाहस्री शीघ्रमानीयतामिति । औपकार्य्याः क्रि-
यन्तां च राज्ञो बहुगुणान्विताः ॥ ९ ॥ ब्राह्मणावसथाश्चैव
कर्त्तव्याः शतशः शुभाः । भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनि-
ष्ठिताः ॥ १० ॥ पौरजानपदस्यापि कर्त्तव्याश्च सुविस्तराः ।
आगतानां सुदूराच्च पार्थिवानां पृथक् पृथक् ॥ ११ ॥ वाजि-
वारणशालाश्च तथा शय्यागृहाणि च । भटानां महदावासा
वैदेशिकनिवासिनाम् ॥ १२ ॥ आवासा बहुभक्ष्या वै सर्वकामै-
रुपस्थिताः । तथा पौरजनस्यापि जनस्य बहुशोभनम् ॥ १३ ॥
दातव्यमन्नं विधिवत् सत्कृत्य न तु लीलया । सर्वे वर्णा यथा
पूजां प्राप्नुवन्ति सुसत्कृताः ॥ १४ ॥ न चावज्ञा प्रयोक्तव्या काम-
क्रोधवशादपि । यज्ञकर्मसु ये व्यग्राः पुरुषाः शिल्पिनस्तथा ॥
१५ ॥ तेषामपि विशेषेण पूजा कार्य्या यथाक्रमम् । ये स्युः
सम्पूजिताः सर्वे वसुभिर्भोजनेन च ॥ १६ ॥ यथा सर्व्वं सुवि-
हितं न किञ्चित् परिहीयते । तथा भवन्तः कुर्व्वन्तु प्रीति-
स्निग्धेन चेतसा ॥ १७ ॥ ते च स्युः सुहृदः सर्व्वे वसुभिर्भोज-
नेन च । ततः सर्व्वे समागम्य वशिष्ठमिदमब्रुवन् । यथेष्टं
तत् सुविहितं न किञ्चित् परिहीयते ॥ १८ ॥ यथोक्तं तत्

तथा त्वेन बाले नित्यं सुखोचिता। रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि ॥ २९ ॥ सा प्राप्तकालं कैकेयि क्षिप्रं कुरु हितं तव। त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३० ॥ मन्थराया वचः श्रुत्वा शयनात्सा शुभानना। उत्तस्थौ हर्षसम्पूर्णा चन्द्रलेखेव शारदी ॥ ३१ ॥ अतीव सा तु सन्तुष्टा कैकेयी विस्मयान्विता। दिव्यमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२ ॥ दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा। कैकेयी मन्थरां हृष्टा पुनरेवाब्रवीदिदम् ॥ ३३ ॥ इदन्तु मन्थरे मह्यमाख्यातं परमम्प्रियम्। एतन्मे प्रियमाख्यातं किम्भूयो वा करोमि ते ॥ ३४ ॥ रामे वा भरते वाहं विशेषं नोपलक्षये। तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५ ॥ न मे परं किञ्चिदितो वरं पुनः प्रियं प्रियार्हे सुवचं वचोऽमृतम्। तथा ह्यवोचस्त्वमतः प्रियोत्तरं वरं परं ते प्रददामि तं वृणु ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तमः सर्गः।

---

मन्थरा त्वभ्यसूयैनामुत्सृज्याभरणं हि तत्। उवाचेदन्ततो वाक्यं शोकदुःखसमन्विता ॥ १ ॥ हर्षं किमर्थमस्थाने कृतवत्यसि बालिशे। शोकसागरमध्यस्थमात्मानमवबुध्यसे ॥ २ ॥ मनसा प्रहसामि त्वां देवि दुःखार्दिता सती। यच्छोचितव्ये हृष्टासि प्राप्य त्वं व्यसनं महत् ॥ ३ ॥ शोचामि दुर्मतित्वन्ते का हि प्राज्ञा प्रहर्षयेत्। अरेः सपत्नीपुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४ ॥ भरतादेव रामस्य राज्यसाधारणाद्भयम्। तद्विचिन्त्य विषण्णास्मि

भयं भीताद्विजायते ॥५॥ लक्ष्मणो हि महाबाहू रामं सर्वात्मना गतः। शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा॥ ६ ॥ प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि। राज्यक्रमो विप्रकृष्टस्तयोस्तावद्यवीयसोः॥ ७॥ विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः। भयात्प्रवेपे रामस्य चिन्तयन्ती तवात्मजम्॥ ८॥ सुभगा किल कौशल्या यस्याः पुत्त्रोभिषेक्ष्यते। यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः॥ ९॥ प्राप्तां वसुमतीं प्रीतिं प्रतीतां हतविद्विषाम्। उपस्थास्यसि कौशल्यां दासीव त्वं कृतांजलिः॥१०॥ एवं च त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि। पुत्त्रश्च तव रामस्य प्रेष्यत्वं हि गमिष्यति॥ ११॥ हृष्टाः खलु भविष्यन्ति रामस्य परमा स्त्रियः। अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥१२॥ तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरान्ततः। रामस्यैव गुणान्देवी कैकेयी प्रशशंस ह॥ १३॥ धर्मज्ञो गुणवान्दान्तः कृतज्ञः सत्यवाञ्छुचिः। रामो राजसुतो ज्येष्ठो यौवराज्यमतोर्हति॥१४॥ भ्रातॄन्पुत्रांश्च दीर्घायुः पितृवत्पालयिष्यति। सन्तप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम्॥ १५॥ भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम्॥ पितृपैतामहं राज्यमवाप्स्यति नरर्षभः॥ १६॥ सा त्वमभ्युदये प्राप्ते दह्यमानेव मन्थरे। भविष्यति च कल्याणे किमिदं परितप्यसे॥ १७॥ यथा वै भरतो मान्यस्तथा भूयोपि राघवः। कौशल्यातोतिरिक्तं च मम शुश्रूषते बहु॥१८॥ राज्यं यदि हि रामस्य भरतस्यापि तत्तदा। मन्यते हि यथात्मानं तथा भ्रातॄंस्तु राघवः॥१९॥ कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता। दीर्घमुष्णं विनिश्वस्य कैकेयीमिदमब्रवीत्॥ २०॥ अनर्थदर्शिनी मौर्ख्यान्नात्मानमवबुध्यसे। शोकव्यसनविस्तीर्णे मज्जन्तीं दुःखसागरे॥२१॥ भविता राघवो राजा राघवस्य च यः सुतः। राज-

वंशात्तु भरतः कैकेयि परिहास्यसे ॥ २२ ॥ न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि। स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३ ॥ तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः। स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि ॥२४॥ असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति। अनाथवत्सुखेभ्यश्च राजवंशाच्च वत्सले ॥२५॥ साहं त्वदर्थे संप्राप्ता त्वं तु मां नावबुध्यसे। सपत्नीवृद्धौ या मे त्वं प्रदेयं दातुमर्हसि ॥ २६ ॥ ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम्। देशान्तरं नापयिता लोकान्तरमथापि वा ॥ २७ ॥ बाल एव तु मातुल्यं भरतो नापितस्त्वया। सन्निकर्षाच्च सौहार्दं जायते स्थावरेष्विव ॥ २८ ॥ भरतानुगतः सोपि शत्रुघ्नस्तत्समङ्गतः। लक्ष्मणोपि यथा रामस्तथायं भरतङ्गतः ॥ २९ ॥ श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो वनजीवनैः। सन्निकर्षादिषीकाभिर्मोचितः परमाद्भयात् ॥ ३०॥ गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः। अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१ ॥ तस्मात् न लक्ष्मणे रामः पापं किञ्चित्करिष्यति। रामस्तु भरते पापं कुर्यादेव न संशयः ॥ ३२ ॥ तस्माद्राजगृहादेव वनं गच्छतु राघवः। एतद्धि रोचते मह्यं भृशञ्चापि हितं तव ॥ ३३ ॥ एवन्ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति। यदि चेद्भरतो धर्मात् पित्र्यं राज्यमवाप्स्यति ॥ ३४ ॥ स ते सुखोचितो बालो रामस्य सहजो रिपुः। समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५ ॥ अभिद्रुतमिवारण्ये सिंहेन गजयूथपम्। प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६ ॥ दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया। राममाता सपत्नी ते कथं वैरन्नयापयेत् ॥३७॥ यदा च रामः पृथिवीमवाप्स्यति प्रभूतरत्नाकरशैलसंयुताम्। तदा गमिष्यस्यशुभं पराभवं सहैव दीना भरतेन भामिनि ॥ ३८ ॥ यदा हि रामः पृथिवी-

मवाप्स्यति ध्रुवं प्रनष्टो भरतो भविष्यति। अतो हि संचिन्तय राज्यमात्मजे परस्य चैवास्य विवासकारणम् ॥३८॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

अष्टमः सर्गः ।

---

एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना। दीर्घमुष्णं विनिश्वस्य मन्थरामिदमब्रवीत् ॥ १ ॥ अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम्। यौवराज्येन भरतं क्षिप्रमद्याभिषेचये ॥२॥ इदं त्विदानीं संपश्य केनोपायेन साधये। भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ३॥ एवमुक्ता तु सा देव्या मन्थरा पापदर्शिनी। रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४ ॥ हन्तेदानीं प्रपश्य त्वं कैकेयि श्रूयतां मे। यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥५॥ किन्न स्मरसि कैकेयि स्मरन्ती वा निगूहसे। यदुच्यमानमात्मार्थमतस्त्वं श्रोतुमिच्छसि ॥ ६ ॥ मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि। श्रूयतामभिधास्यामि श्रुत्वा चैतद्विधीयताम् ॥ ७॥ श्रुत्वैवं वचनन्तस्या मन्थरायास्तु कैकयी। किञ्चिदुत्थाय शयनात्स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥ कथयस्व ममोपायं केनोपायेन मन्थरे। भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ९ ॥ एवमुक्ता तदा देव्या मन्थरा पापदर्शिनी। रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ १० ॥ पुरा देवासुरे युद्धे सह राजर्षिभिः पतिः। अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११ ॥ दिशमास्थाय कैकेयि दक्षिणां दण्डकान् प्रति। वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२ ॥ स शम्बर इति ख्यातः शतमायो महासुरः।

ददौ शक्रस्य संग्रामं देवसंघैरनिन्दितः ॥ १३ ॥ तस्मिन्महति संग्रामे पुरुषान् क्षतविक्षतान्। रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसापास्य राक्षसाः ॥ १४ ॥ तत्राकरोन्महायुद्धं राजा दशरथस्तदा। असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५ ॥ अपवाह्य त्वया देवि संग्रामान्नष्टचेतनः। तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६ ॥ तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने। स त्वयोक्तः पतिर्देवि यदिच्छेयं तदा वरम् ॥ १७ ॥ गृह्णीयान्तु तदा भर्त्तस्तथेत्युक्तं महात्मना। अनभिज्ञा ह्यहं देवि त्वयैव कथितं पुरा ॥ १८ ॥ कथैषा तव तु स्नेहान्मनसा धार्य्यते मया। रामाभिषेकसम्भारान्निगृह्य विनिवर्त्तय ॥ १९ ॥ तौ च याचस्व भर्तारं भरतस्याभिषेचनम्। प्रव्राजनञ्च रामस्य वर्षाणि च चतुर्दश ॥ २० ॥ चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम्। प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥ २१ ॥ क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते। शेष्वानंतर्हितायां त्वं भूमौ मलिनवासिनी ॥ २२ ॥ मास्मैनं प्रत्युदीक्षेथाः माचैनमभिभाषथा। रुदन्ती पार्थिवं दृष्ट्वा जगत्यां शोकलालसा ॥ २३ ॥ दयिता त्वं सदा भर्त्तुरत्र मे नास्ति संशयः। त्वत्कृते च महाराजो विशेदपि हुताशनम् ॥ २४ ॥ न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम्। तव प्रियार्थं राजा तु प्राणानपि परित्यजेत् ॥ २५ ॥ न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः। मन्दस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ॥ २६ ॥ मणिमुक्तासुवर्णानि रत्नानि विविधानि च। दद्याद्दशरथो राजा मास्म तेषु मनः कृथाः ॥ २७ ॥ यौ तौ देवासुरे युद्धे वरौ दशरथो ददौ। तौ स्मारय महाभागे सोऽर्थो मा त्वामतिक्रमेत् ॥ २८ ॥ यदा तु ते वरं दद्यात् स्वयमुत्थाप्य राघवः। व्यवस्थाप्य महाराजं त्वमिमं वृणुये वरम् ॥ २९ ॥ रामप्रव्रजनं दूरं नववर्षाणि पञ्च च।

भरतः क्रियतां राजा पृथिव्यां पार्थिवर्षभ ॥ ३० ॥ चतुर्दश हि वर्षाणि रामे प्रव्रजिते वनम् । रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१ ॥ रामप्रव्राजनञ्चैव देवि याचस्व तं वरम् । एवं सेत्स्यन्ति पुत्रस्य सर्वार्थास्तव कामिनि ॥३२॥ एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति । भरतश्च गतामित्रस्तव राजा भविष्यति ॥ ३३ ॥ येन कालेन रामश्च वनात्प्रत्यागमिष्यति । अन्तर्बहिश्च पुत्रस्ते कृतमूलो भविष्यति ॥ ३४ ॥ संगृहीतमनुष्यश्च सुहृद्भिः साकमात्मवान् । प्राप्तकालं तु मन्येऽहं राजानं वीतसाध्वसा ॥ ३५ ॥ रामाभिषेकसङ्कल्पान्निगृह्य विनिवर्त्तय । अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ॥ ३६ ॥ हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् । सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ ३७ ॥ कैकेयी विस्मयं प्राप्य परं परमदर्शना । प्रज्ञान्ते नावजानामि श्रेष्ठे श्रेष्ठाभिधायिनि ॥ ३८ ॥ पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये । त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ॥ ३९ ॥ नाहं समवबुध्येयं कुब्जे राज्ञश्चिकीर्षितम् । सन्ति दुःसंस्थिताः सर्वे वक्राः परमपापिकाः ॥ ४० ॥ त्वं पद्ममिव वातेन सन्नता प्रियदर्शना । उरस्तेऽभिनिविष्टं वै यावत् स्कन्धात्समुन्नतम् ॥४१॥ अधस्ताच्चोदरं शान्तं सुनाभमिव लज्जितम् । प्रतिपूर्णञ्च जघनं सुपीनौ च पयोधरौ ॥४२॥ विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे । जघनं तव निर्घुष्टं रशनादामभूषितम् ॥ ४३ ॥ जङ्घे भृशमुपन्यस्ते पादौ च व्यायतावुभौ । त्वमायताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनी ॥ ४४ ॥ अग्रतो मम गच्छन्ती राजसेतीव शोभने । आसन्याः शम्बरे माया सहस्रमसुराधिपे ॥ ४५ ॥ हृदये ते निविष्टास्ता भूयश्चान्याः सहस्रशः । तदेव स्थगु यद्दीर्घं रथघोणमिवायतम् ॥४६ । मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते । अत तेऽहं प्रमोक्ष्यामि मालां

कुब्जे हिरण्मयीम् ॥ ४७ ॥ अभिषिक्ते च भरते राघवे च वनं
गते । जातेन च सुवर्णेन सुनिष्टप्तेन सुन्दरि ॥ ४८ ॥ लब्धार्था
च प्रतीता च लेपयिष्यामि ते स्थगु । मुखे च तिलकं चित्रं
जातरूपमयं शुभम् ॥ ४९ ॥ कारयिष्यामि ते कुब्जे शुभान्या-
भरणानि च । परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५० ॥
चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना । गमिष्यसि गतिं मुख्यां
गर्वयन्ती द्विषज्जने ॥५१॥ तवापि कुब्जाः कुब्जायाः सर्वाभरण-
भूषिताः । पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२ ॥
इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् । शयानां शयने शुभ्रे
वेद्यामग्निशिखामिव ॥ ५३ ॥ गतोदके सेतुबन्धो न कल्याणं
विधीयते । उत्तिष्ठ कुरु कल्याणं राजानमनुदर्शय ॥ ५४ ॥
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह । क्रोधागारं विशा-
लाक्षी सौभाग्यमदगर्विता ॥ ५५ ॥ अनेकशतसाहस्रं मुक्ता-
हारं वराङ्गना । अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥५६॥
तदा हेमोपमा तत्र कुब्जावाक्यवशङ्गता । संविश्य भूमौ कैकेयी
मन्थरामिदमब्रवीत् ॥ ५७॥ इह वा मां मृतां कुब्जे नृपायावेदयि-
ष्यसि । वनन्तु राघवे प्राप्ते भरतः प्राप्स्यते क्षितिम् ॥ ५८॥
सुवर्णेन न मे ह्यर्थो न रत्नैर्न च भोजनैः । एष मे जीवितस्यान्तो
रामो यद्यभिषिच्यते ॥ ५९ ॥ अथो पुनस्तां महिषीं महीक्षितो
वचोभिरत्यर्थमहापराक्रमैः । उवाच कुब्जा भरतस्य मातरं
हितं वचो राममुपेत्य चाहितम् ॥ ६० ॥ प्रपत्स्यते राज्यमिदं हि
राघवो यदि ध्रुवं त्वं ससुता च तप्स्यसे । ततो हि कल्याणि
यतस्व तत्तथा यथा सुतस्ते भरतोऽभिषिच्यते ॥ ६१ ॥ तथा-
तिविद्धा महिषीति कुब्जया समाहता वागिषुभिर्मुहुर्मुहुः । वि-
धाय हस्तौ हृदयेऽतिविस्मिता शशंस कुब्जां कुपिता पुनः पुनः
॥६२॥ यमस्य वा मां विषयं गतामितो निशम्य कुब्जे प्रतिवेद-

ष्यसि । वनं गते वा सुचिराय राघवो समृद्धकामो भरतो भविष्यति ॥ ६३ ॥ अहं हि नैवास्तरणानि न स्रजो न चन्दनं नाञ्जनपानभोजनम् । न किञ्चिदिच्छामि न चेह जीवितं न चेदितो गच्छति राघवो वनम् ॥६४॥ अथैवमुक्त्वा वचनं सुदारुणं निधाय सर्वाभरणानि भामिनी । असंस्कृतामास्तरणेन मेदिनीं तदाधिशिश्ये पतितेव किन्नरी ॥ ६५ ॥ उदीर्णसंरम्भतमोवृताननो तदावमुक्तोत्तममाल्यभूषणा । नरेन्द्रपत्नी विमना बभूव सा तमोवृता द्यौरिव मग्नतारका ॥ ६६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

नवमः सर्गः ।

---

विदर्शिता यदा देवी कुब्जया पापया भृशम् । तदा शेते स्म सा भूमौ दिग्धविद्धेव किन्नरी । निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी । मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥२॥ सा दीना निश्चयं कृत्वा मन्थरा वाक्यमोहिता । नागकन्येव निश्वस्य दीर्घमुष्णं च भामिनी ॥३॥ मुहूर्त्तश्चिन्तयामास मार्गमात्मसुखावहम् । सा सुहृच्चार्थकामा च तं निशम्य विनिश्चयम् ॥ ॥ ४ ॥ बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा । अथ सा रुषिता देवी सम्यक्कृत्वा विनिश्चयम् ॥ ५ ॥ संविवेशाबला भूमौ निवेश्य भ्रुकुटिं मुखे । ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ ६ ॥ अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे । तथा तान्यपविद्धानि माल्यानाभरणानि च ॥ ७ ॥ अशोभयन्त वसुधां नक्षत्राणि यथा नभः । क्रोधागारे च पतिता सा बभौ मलिनाम्बरा ॥८॥ एकवेणीं दृढां बध्वा गतसत्वेव किन्नरी ।

आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥ ९ ॥ उपस्थानमनु-
ज्ञाप्य प्रविवेश निवेशनत्। अद्य रामाभिषेको वै प्रसिद्ध इति
जज्ञिवान् ॥१०॥ प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी।
स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ ११ ॥ पाण्डुराभ्र-
मिवाकाशं राहुयुक्तं निशाकरः। शुकबर्हिसमायुक्तं क्रौञ्चहंस-
रुता युतम् ॥१२॥ वादित्ररवसंघुष्टं कुब्जावामनिकायुतम्। लता-
गृहैश्चित्रगृहैश्चम्पकाशोकशोभितैः ॥ १३ ॥ दान्तराजतसौवर्ण-
वेदिकाभिः समायुतम्। नित्यपुष्पफलैर्वृक्षैर्वापीभिरुपशोभितम्॥
॥ १४ ॥ दान्तराजतसौवर्णैः संवृतं परमासनैः। विविधैरन्न-
पानैश्च भक्ष्यैश्च विविधैरपि ॥ १५ ॥ उपपन्नं महार्हैश्च भूषणैः-
स्त्रिदिवोपमम्। स प्रविश्य महाराजः स्वमन्तःपुरमृद्धिमत् ॥१६॥
न ददर्श स्त्रियं राजा कैकेयीं शयनोत्तमे। स कामबलसंयुक्तो
रत्यर्थी मनुजाधिपः ॥१७॥ अपश्यन्दयितां भार्यां पप्रच्छ विष-
साद च। न हि तस्य पुरा देवी तां वेलामत्यवर्त्तत॥ १८ ॥
न च राजा गृहं शून्यं प्रविवेश कदाचन। ततो गृहगतो राजा
कैकेयीं पर्य्यपृच्छत ॥ १९ ॥ यथा पुरमविज्ञाय स्वार्थलिप्सुमप-
ण्डिताम्। प्रतीहारी त्वथोवाच संत्रस्ता तु कृताञ्जलिः ॥ २० ॥
देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता। प्रतिहार्य्या वचः
श्रुत्वा राजा परमदुर्मनाः ॥ २१॥ विषसाद पुनर्भूयो लुलित-
व्याकुलेन्द्रियः। तत्र तां पतितां भूमौ शयानामयथोचिताम् ॥
॥ २२ ॥ प्रतप्त इव दुःखेन सोपश्यज्जगतीपतिः। स वृद्ध-
स्तरुणीं भार्य्यां प्राणेभ्योपि गरीयसीम्॥ २३ ॥ अपापः पाप-
सङ्कल्पां ददर्श धरणीतले। लतामिव विनिष्छिन्नां पतितां
देवतामिव ॥२४॥ किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा।
मायामिव परिभ्रष्टां हरिणीमिव संयताम् ॥ २५ ॥ करेणुमिव
दिग्धेन विद्धां मृगयुना वने। महागज इवारण्ये स्नेहात्परमः

दुःखितः ॥२६॥ परिमृज्य च पाणिभ्यामभिसंत्रस्तचेतनः । कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७ ॥ न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् । देवि केनाभियुक्तासि केन वासि विमानिता ॥२८॥ यदिदं मम दुःखाय शेषे कल्याणि पांशुषु । भूमौ शेषे किमर्थं त्वं मयि कल्याणचेतसि ॥२९॥ भूतोपहतचित्तेव मम चित्तप्रमाथिनी । सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः ॥३०॥ सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि । कस्य वापि प्रियं कार्य्यं केन वा विप्रियं कृतम् ॥३१॥ कः प्रियं लभतामद्य को वा सुमहदप्रियम् । मा रोदीर्मा च कार्षीस्त्वं देवि सम्परिशोषणम् ॥ ३२ ॥ अवध्यो बध्यतां को वा बध्यः को वा विमुच्यताम् । दरिद्रः को भवेदाढ्यो द्रव्यवान्वाप्यकिञ्चनः ॥३३॥ अहञ्च हि मदीयाश्च सर्वे तव वशानुगाः । न ते कञ्चिदभिप्रायं व्याहन्तुमहमुत्सहे ॥३४॥ आत्मनो जीवितेनापि ब्रूहि यन्मनसि स्थितम् । बलमात्मनि जानन्ती न मां शंकितुमर्हसि ॥ ३५ ॥ करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे । यावदावर्त्तते चक्रं तावती मे वसुन्धरा । ३६ ॥ द्राविडाः सिन्धुसौवीराः सौराष्ट्रा दक्षिणापथाः । वङ्गाङ्गमागधा मत्स्याः समृद्धाः काशिकोशलाः ।३७ तत्र जातं बहु द्रव्यं धनधान्यमजाविकम् । ततो वृणीष्व कैकेयि यद्यत्त्वं मनसेच्छसि ।। ३८ ॥ किमायासेन ते भीरु उत्तिष्ठोत्तिष्ठ शोभने । तत्त्वं मे ब्रूहि कैकेयि यतस्ते भयमागतम् ।।३९। तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् । तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् ॥४०॥ परिपीडयितुं भूयो भर्तारमुपचक्रमे ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
दशमः सर्गः ।

———

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् । उवाच पृथिवीपालं
कैकेयी दारुणं वचः ॥ १ ॥ नास्मि विप्रकृता देव केनचिन्नावमा-
निता । अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥ २ ॥
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि । अथ तं व्याहरि-
ष्यामि यथाभिप्रार्थितं मया ॥३॥ तामुवाच महाराजः कैकेयी-
मीषदुत्स्मयः । कामी हस्तेन संगृह्य मूर्धजेषु भुवि स्थिताम् ॥४॥
अवलिप्ते न जानासि त्वत्तः प्रियतरो मम । मनुजो मनुजव्याघ्रा-
द्रामादन्यो न विद्यते ॥ ५ ॥ तेनाजय्येन मुख्येन राघवेण महा-
त्मना । शपे ते जीवनार्हेण ब्रूहि यन्मनसेप्सितम् ॥ ६ ॥ यं
मुहूर्त्तमपश्यंस्तु न जीवेयमहं ध्रुवम् । तेन रामेण कैकेयि शपे ते
वचनक्रियाम् ॥ ७ ॥ आत्मना चात्मजैश्चान्यैर्वृणोयं मनुजर्षभम् ।
तेन रामेण कैकेयि शपे ते वचनक्रियाम् ॥८॥ भद्रे हृदयमप्येत-
दनुमृश्योद्धरस्व मे । एतत्समीक्ष्य कैकेयि ब्रूहि यत्साधु मन्यसे ॥९॥
बलमात्मनि पश्यन्ती न विशङ्कितुमर्हसि । करिष्यामि तव प्रीतिं
सुकृतेनापि ते शपे ॥१०॥ सा तदर्थमना देवी तमभिप्रायमाग-
तम् । निर्माध्यस्थ्याच्च हर्षाच्च बभाषे दुर्वचं वचः ॥ ११ ॥ तेन
वाक्येन संहृष्टा तमभिप्रायमात्मनः । व्याजहार महाघोरमभ्या-
गतमिवान्तकम् ॥ १२॥ यथा क्रमेण शपसे वरं मम ददासि च ।
तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः सेन्द्रपुरोगमाः ॥ १३ ॥ चन्द्रादित्यौ
नभश्चैव ग्रहरात्र्यहनी दिशः । जगच्च पृथिवी चेयं सगन्धर्वा स-
राक्षसा ॥१४॥ निशाचराणि भूतानि गृहेषु गृहदेवताः । यानि
चान्यानि भूतानि जानीयुर्भाषितं तव ॥ १५ ॥ सत्यसन्धो महा-
तेजा धर्मज्ञः सत्यवाक् शुचिः । वरं मम ददात्येष सर्वे शृण्वन्तु
देवताः ॥ १६ ॥ इति देवी महेष्वासं परिगृह्याभिशस्य च । ततः
परमुवाचेदं वरदं काममोहितम् ॥ १७ ॥ स्मर राजन् पुरावृत्तं
तस्मिन्देवासुरे रणे । तत्र त्वां च्यावयच्छत्रुस्तव जीवितमन्तरा

॥१८॥ तत्र चापि मया देव यत्त्वं समभिरक्षितः । जाग्रत्या यत-
मानायास्ततो मे प्रददौ वरौ ॥ १९ ॥ तौ दत्तौ च वरौ देव
निक्षेपौ मृगयाम्यहम् । तवैव पृथिवीपाल सकाशे रघुनन्दन ॥२०
तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् । अद्यैव हि प्रहास्यामि
जीवितं त्वद्विमानिता ॥२१॥ वाङ्मात्रेण तदा राजा कैकेय्या
स्ववशे कृतः । प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥२२ ॥
ततः परमुवाचेदं वरदं काममोहितम् । वरौ देयौ त्वया देव
तदा दत्तौ महीपते ॥ २३ ॥ तौ तावदहमद्यैव वक्ष्यामि शृणु मे
वचः । अभिषेकसमारम्भो राघवस्योपकल्पितः ॥ २४ ॥ अने-
नैवाभिषेकेण भरतो मेऽभिषिच्यताम् । यो द्वितीयो वरो देव
दत्तः प्रीतेन मे त्वया ॥२५॥ तदा देवासुरे युद्धे तस्य कालोऽयमा-
गतः । नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥ २६ ॥
चीराजिनधरो धीरो रामो भवतु तापसः । भरतो भजतामद्य
यौवराज्यमकण्टकम् ॥ २७ ॥ एष मे परमः कामो दत्तमेव वरं
वृणे । अद्य चैव हि पश्येयं प्रयान्तं राघवं वने ॥२८॥ स राज-
राजो भव सत्यसङ्गरः कुलं च शीलञ्च हि जन्म रक्ष च । परत्र
वासे हि वदन्त्यनुत्तमं तपोधनाः सत्यवचो हितं नृणाम् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

एकादशः सर्गः ।

---

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः । चिन्तामभि-
समापेदे मुहूर्त्तं प्रतताप च ॥१॥ किं नु मेयं दिवास्वप्नः चित्त-
मोहोऽपि वा मम । अनुभूतोपसर्गो वा मनसो वाप्युपद्रवः ॥२।
इति संचिन्त्य तद्राजा नाध्यगच्छत्तदा सुखम् । प्रतिलभ्य ततः

संज्ञां कैकेयीवाक्यतापितः ॥३॥ व्यथितो विक्लवश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः । असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन् ॥ ४ ॥ मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः । अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः ॥५॥ मोहमापेदिवान् भूयः शोकोपहतचेतनः । चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः ॥ ६ ॥ कैकेयीमब्रवीत् क्रुद्धो निर्दहन्निव तेजसा । नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ॥ ७ ॥ किं कृतं तव रामेण पापे पापं मयापि वा । सदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ ८ ॥ तस्यैवं त्वमनर्थाय किंनिमित्तमिहोद्यता । त्वं मयात्मविनाशाय भवनं स्वं निवेशिता ॥९॥ अविज्ञानान्नृपसुता व्याली तीक्ष्णविषा यथा । जीवलोको यदा सर्वो रामस्याह गुणस्तवम् ॥ १० ॥ अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् । कौशल्यां च सुमित्रां च त्यजेयमपि वा श्रियम् ॥ ११ ॥ जीवितं चात्मना रामं न त्वेव पितृवत्सलम् । परा भवति मे प्रीतिर्दृष्ट्वा तनयमग्रजम् ॥१२ ॥ अपश्यतस्तु मे रामं नष्टं भवति चेतनम् । तिष्ठेल्लोको विना सूर्यं शस्यं वा सलिलं विना ॥ १३ ॥ न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् । तदलं त्यज्यतामेष निश्चयः पापनिश्चये ॥१४॥ अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे । किमर्थं चिन्तितं पापे त्वया परमदारुणम् ॥ १५ ॥ अथ जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये । अस्तु यत्तत्त्वया सर्वं व्याहृतं राघवं प्रति । ॥ १६ ॥ स मे ज्येष्ठसुतः श्रीमान्धर्मज्येष्ठ इतीव मे । तत्त्वया प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७ ॥ तच्छ्रुत्वा शोकसन्तप्ता सन्तापयसि मां भृशम् । आविष्टासि गृहे शून्ये सा त्वं परवशं गता ॥१८॥ इक्ष्वाकूणां कुले देवि सम्प्राप्तः सुमहानयम् । अनयो नयसम्पन्ने यत्र ते विकृता मतिः ॥ १९ ॥ न हि किञ्चिदयुक्तं वा विप्रियं वा पुरा मम । अकरोस्त्वं विशालाक्षि

तेन न श्रद्दधामि ते ॥२०॥ ननु ते राघवस्तुल्यो भरतेन महात्मना। बहुशो हि स्म बाले त्वं कथाः कथयसे मम ॥२१॥ तस्य धर्मात्मनो देवि वने वासं यशस्विनः। कथं रोचयसे भीरु नव वर्षाणि पञ्च च ॥ २२ ॥ अत्यन्तसुकुमारस्य तस्य धर्मकृतात्मनः। कथं रोचयसे वासमरण्ये भृशदारुणे ॥ २३ ॥ रोचयस्यभिरामस्य रामस्य शुभलोचने। तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥ २४ ॥ रामो हि भरताद्भूयस्तव शुश्रूषते सदा। विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५ ॥ शुश्रूषां गौरवञ्चैव प्रमाणं वचनक्रियाम्। कस्तु भूयस्तरं कुर्यादन्यत्र पुरुषर्षभात् ॥ २६ ॥ बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम्। परिवादोपवादो वा राघवे नोपपद्यते ॥२७॥ सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा। गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ॥२८॥ सत्येन लोकान् जयति द्विजान्दानेन राघवः। गुरून् शुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ २९॥ सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम्। विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३० ॥ तस्मिन्नार्जवसम्पन्ने देवि देवोपमे कथम्। पापमाशंससे रामे महर्षिसमतेजसि ॥ ३१ ॥ न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः। स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम् ॥ ३२ ॥ क्षमा यस्मिंस्तपस्त्यागः सत्यं धर्मः कृतज्ञता। अप्यहिंसा च भूतानां तमृते का गतिर्मम ॥ ३३ ॥ मम वृद्धस्य कैकेयि गतान्तस्य तपस्विनः। दीनं लालप्यमानस्य कारुण्यं कर्त्तुमर्हसि ॥ ३४ ॥ पृथिव्यां सागरान्तायां यत्किञ्चिदधिगम्यते। तत्सर्वं तव दास्यामि मा च त्वं मृत्युमाविश ॥ ३५ ॥ अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते। शरणं भव रामस्य मा धर्मो मामिह स्पृशेत् ॥३६॥ इति दुःखाभिसन्तप्तं विलपन्तमचेतनम्। घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७ ॥

परं शोकार्णवस्याशु प्रलपन्तं पुनः पुनः। प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः॥ ३८॥ यदि दत्त्वा वरं राजन् पुनः प्रत्यनुतप्यसे। धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि॥ ३९॥ यदा समेता बहवस्त्वया राजर्षयः सह। कथयिष्यन्ति धर्मज्ञ तत्र किं प्रतिवक्ष्यसि॥४०॥ यस्याः प्रसादे जीवामि या च मामभ्यपालयत्। तस्याः कृता मया मिथ्या कैकेय्या इति वक्ष्यसि॥४१॥ किल्बिषत्वं नरेन्द्राणां करिष्यसि नराधिप। यो दत्त्वा वरमद्यैव पुनरन्यानि भाषसे॥ ४२॥ शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ। अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम्॥४३॥ सागरः समयं कृत्वा न वेलामतिवर्त्तते। समयं मानृतं कार्षीः पूर्ववृत्तमनुस्मरन्॥४४॥ सत्यं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च। सह कौशल्यया नित्यं रन्तुमिच्छसि दुर्मते॥४५॥ भवत्वधर्मो धर्मो वा सत्यं वा यदि वानृतम्। यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः॥ ४६॥ अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः। पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते॥ ४७॥ एकाहमपि पश्येयं यद्यहं राममातरम्। अञ्जलिं प्रतिगृह्णन्तीं न क्रियां समुपाददे॥४८॥ भरतेनात्मना चाहं शपे ते मनुजाधिप। यथा नान्येन तुष्येयमृते रामविवासनात्॥ ४९॥ एतावदुक्त्वा वचनं कैकेयी विरराम ह। विलपन्तं च राजानं न प्रतिव्याजहार सा॥ ५०॥ श्रुत्वा तु राजा कैकेय्या वाक्यं परमशोभनम्। रामस्य च वने वासमैश्वर्यं भरतस्य च॥ ५१॥ नाभ्यभाषत कैकेयीं मुहूर्त्तं व्याकुलेन्द्रियः। प्रेक्षतानिमिषो देवीं प्रियामप्रियवादिनीम्॥ ५२॥ तां हि वज्रसमां वाचमाकर्ण्य हृदयाप्रियाम्। दुःखशोकमयीं श्रुत्वा राजा न सुखितोऽभवत्॥ ५३॥ स देव्या व्यवसायञ्च घोरञ्च शपथं कृतम्। ध्यात्वा रामेति निश्वस्यच्छिन्नस्तरुरिवापतत्॥ ५४॥ नष्टचित्तो यथोन्मत्तो विपरीतो यथा-

तुरः । हृततेजा यथा सर्पो बभूव जगतीपतिः ॥५५॥ दीनया-
तुरया वाचा इतीदमोवाच कैकयीम् । अनर्थमिममर्थाभं केन
त्वमुपदेशिता ॥५६॥ भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे ।
शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा ॥ ५७ ॥ बालायास्त-
त्त्विदानीन्ते लक्षये विपरीतवत् । कुतो वा ते भयं जातं या त्व-
मेवंविधं वरम् ॥५८॥ राष्ट्रे भरतमासीनं वृणीषे राघवं वने ।
विरमैतेन भावेन त्वमेतेनानृतेन वा ॥ ५९ ॥ यदि भर्तुः प्रियं
कार्य्यं लोकस्य भरतस्य च । नृशंसे पापसङ्कल्पे क्षुद्रे दुष्कृत-
कारिणि । किन्नु दुःखमलीकं वा मयि रामे च पश्यसि ॥ ६० ॥
न कथंचिदृते रामाद्भरतो राज्यमावसेत् । रामादपि हि तं मन्ये
धर्मतो बलवत्तरम् ॥ ६१ ॥ कथं द्रक्ष्यामि रामस्य वनं गच्छेति
भाषिते । मुखवर्णं विवर्णन्तु यथैवेन्दुमुपप्लुतम् ॥६२॥ तां तु मे
सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् । कथं द्रक्ष्याम्यपावृत्तां
परैरिव हताञ्चमूम् ॥ ६३ ॥ किं मां वक्ष्यन्ति राजानो नाना-
दिग्भ्यः समागताः । बालो बतायमैक्ष्वाकुश्चिरं राज्यमकारयत् ॥
॥ ६४ ॥ यदा हि बहवो वृद्धा गुणवन्तो बहुश्रुताः । परिप्रक्ष्यन्ति
काकुत्स्थं वक्ष्यामि किमहन्तदा ॥ ६५ ॥ कैकेय्या क्लिश्यमानेन
रामः प्रव्राजितो मया । यदि सत्यं ब्रवीम्येतत्तदसत्यं भवि-
ष्यति ॥ ६६ ॥ किं मां वक्ष्यति कौशल्या राघवे वनमास्थिते ।
किञ्चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् ॥६७॥ यदा यदा च
कौशल्या दासीवच्च सखीव च । भार्य्यावद्भगिनीवच्च मातृव-
च्चोपतिष्ठते ॥ ६८ ॥ सततं प्रियकामा मे प्रियपुत्त्रा प्रियंवदा ।
न मया सत्कृता देवी सत्कारार्हा कृते तव ॥ ६९ ॥ इदानीं
तत्तपति मां यन्मया सुकृतं त्वयि । अपथ्यं व्यञ्जनोपेतं भुक्त-
मन्नमिवातुरम् ॥७०॥ विप्रकारञ्च रामस्य संप्रयाणं वनस्य च ।
सुमित्रा प्रेक्ष्य वै भीता कथं मे विश्वसिष्यति ॥ ७१ ॥ कृपणं

व्रत वैदेही श्रोष्यति हृदयमप्रियम्। मां च पञ्चत्वमापन्नं रामञ्च वनमाश्रितम् ॥ ७२ ॥ वैदेही बत मे प्राणान् शोचन्ती क्षपयिष्यति। हीना हिमवतः पार्श्वे किन्नरेणेव किन्नरी ॥ ७३ ॥ न हि राममहं दृष्ट्वा प्रवसन्तं महावने। चिरञ्जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् ॥७४॥ सा नूनं विधवा राज्यं सपुत्त्रा कारयिष्यसि। रामे प्रव्राजिते देवि नाहं जीवितुमुत्सहे ॥७५ सतीं त्वामहमत्यन्तं व्यवसाम्यसतीं सतीम्। रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥७६॥ अनृतैर्वत मां सान्त्वैः सान्त्वयन्तीव भाषसे। गीतशब्देन संरुद्ध्य लुब्धो मृगमिवावधीः ॥ ॥ ७७ ॥ अनार्य्य इति मामार्य्याः पुत्त्रविक्रायिकं ध्रुवम्। विकरिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥ ७८ ॥ अहो दुःखमहो कष्टं यत्र वाचः क्षमे तव। दुःखेनैवंविधं प्राप्तं पुराकृतमिवाशुभम् ॥ ७९ ॥ चिरं खलु मया पापे त्वं पापेनाभिरक्षिता। अज्ञानादुपसम्पन्ना रज्जुरुद्बन्धनी यथा ॥ ८० ॥ रममाणस्त्वया सार्द्धं मृत्युं त्वां नाभि लक्षये। बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८१ ॥ तं तु मां जीवलोकोऽयं नूनमाक्रोष्टुमर्हति। मया ह्यपितृकः पुत्रः स महात्मा दुरात्मना ॥ ८२ ॥ बालिशो बत कामात्मा राजा दशरथो भृशम्। स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥ ८३ ॥ व्रतैश्च ब्रह्मचर्य्यैश्च गुरुभिश्चोपकर्षितः। भोगकाले महत् कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८४ ॥ नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम्। स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥८५॥ यदि मे राघवः कुर्य्याद्वनं गच्छेति चोदितः। प्रतिकूलं प्रियं मे स्यान्न तु वत्स करिष्यति ॥ ८६ ॥ शुद्धभावो हि भावं मे न तु ज्ञास्यति राघवः। वनं पुत्त्र व्रजेत्युक्तो नैवान्यत्प्रतिवक्ष्यति ॥ ८७ । राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम्। मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८८ ॥ मृते

मयि गते रामे वनं मनुजपुङ्गवे । इष्टे मम जने शेषे किं पापं
प्रतिपत्स्यसे ॥ ८६ ॥ कौशल्या मां च रामं च पुत्रौ च यदि
हास्यति । दुःखान्यसहती देवी मामेवानुगमिष्यति ॥ ९० ॥
कौशल्याञ्च सुमित्राञ्च मां च पुत्रैस्त्रिभिः सह । प्रक्षिप्य नरके
सा त्वं कैकेयी सुखिनी भव ॥९१॥ मया रामेण च त्यक्तं शाश्वतं
सत्कृतं गुणैः । इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि ॥९२॥
प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् । मास्म मे भरतः कार्षीत्
प्रेतकृत्यं गतायुषः ॥ ९३ ॥ हन्तानार्य्ये ममामित्रे सकामा भव
कैकयि । मृते मयि गते रामे वनं पुरुषपुङ्गवे ॥ ९३ ॥ सेदानीं
विधवा राज्यं सपुत्रा कारयिष्यसि । त्वं राजपुत्रि दैवेन न्यव-
सो मम वेश्मनि ॥ ९४ ॥ अकीर्त्तिश्चातुला लोके ध्रुवः परिभवश्च
मे । सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ९५ ॥ कथं
रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः । पद्भ्यां रामो महारण्ये
वत्सो मे विचरिष्यति ॥९५॥ यस्य चाहारसमये सूदाः कुण्डल-
धारिणः । अहंपूर्वाः पचन्तिस्म प्रशस्तं पानभोजनम् ।९७॥
स कथन्नु कषायाणि तिक्तानि कटुकानि च । भक्षयन्वन्यमाहारं
सुतो मे वर्त्तयिष्यति ॥ ९८ ॥ महार्हवस्त्रसंवीतो भूत्वा चिर-
सुखोचितः । काषायपरिधानस्तु कथं भूमौ निवत्स्यति ॥९९॥
कस्यैतद्दारुणं वाक्यमेवंविधमपीरितम् । रामस्यारण्यगमनं भर-
तस्याभिषेचनम् ॥ १०० ॥ धिगस्तु योषितो नाम शठाः स्वार्थ-
परायणाः । न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ।१०१॥
अनर्थभावेर्थपरे नृशंसे ममानुतापाय निविष्टभावे । किमप्रियं प-
श्यसि मन्निमित्तं हितानुकारिण्ययवापि रामे ॥१०२॥ परित्यजेयुः
पितरोपि पुत्रान् भार्य्याः पतींश्चापि कृतानुरागाः । कृत्स्नं हि
सर्वं कुपितं जगत्स्यां दृष्ट्वैव रामं व्यसने निमग्नम् ॥१०३॥ अहं
पुनर्देवकुमाररूपमलङ्कृतं तं सुतमाव्रजन्तम् । नन्दामि पश्य-

न्निव दर्शनेन भवामि दृष्ट्वैव पुनर्युवेव ॥१०४॥ विना हि सूर्य्येण
भवेत्प्रवृत्तिरवर्षता वज्रधरेण वापि। रामं तु गच्छन्तमितः
समीक्ष्य जीवेन्न कश्चिद्दिति चेतना मे ॥ १०५ ॥ विनाशकामा-
महितामभित्रामावासयं मृत्युमिवात्मनस्त्वां। चिरं वताङ्केन धृता
हि सर्पी महाविषा तेन हतोस्मि मोहात् ॥१०६॥ मया च रा-
मेण सलक्ष्मणेन प्रशास्तु हीनो भरतस्त्वया सह। पुरञ्च राष्ट्रञ्च
निहत्य वान्धवान्ममाहितानां च भवाभिभाषिणी ॥१०७॥ नृशंस-
वृत्ते व्यसनप्रहारिणि प्रसह्य वाक्यं यदिहाद्य भाषसे। न नाम ते
केन मुखात्पतन्त्यधो विशीर्य्यमाणा दशनाः सहस्रधा ॥ १०८ ॥
न किंचिदाहाहितमप्रियं वचो नवेति रामः परुषाणि भाषि-
तुम्। कथं तु रामे ह्यभिरामवादिनि ब्रवीषि दोषान् गुणनित्य-
संमते ॥ १०९ ॥ प्रताम्य वा प्रज्वल वा प्रणश्य वा सहस्रशो वा
स्फुटितां महीं व्रज। न ते करिष्यामि वचः सुदारुणं ममाहितं
कैकयराजघातिनि ॥ ११० ॥ सुरोपमां नित्यमसत्प्रियंवदां
प्रदुष्टभावां स्वकुलोपघातिनीम्। न जीवितुं त्वां विसहे मनो-
रमां दिधक्षमाणां हृदयं सवन्धनम् ॥ १११ ॥ न जीवितं मेस्ति
कुतः पुनः सुखं विनात्मजेनात्मवता कुतो रतिः। समाहितं
देवि न कर्तुमर्हसि स्पृशामि पादावपि ते प्रसीद मे। ११२ ॥ स
भूमिपालो विलपन्ननाथवत् स्त्रिया गृहीतो हृदयेतिमात्रया।
पपात देव्याश्चरणौ प्रसारितावुभावसंस्पृश्य यथातुरस्तथा। ११३॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

द्वादशः सर्गः।

———

अतदर्हं महाराजं शयानमतथोचितम् । ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ॥ १ ॥ अनर्थरूपासिद्धार्था ह्यभीता भयदर्शिनी । पुनराकारयामास तमेव वरमङ्गना ॥२॥ त्वं कत्थसे महाराज सत्यवादी दृढव्रतः । मम चेमं वरं कस्माद्विधारयितुमिच्छसि ॥३॥ एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा । प्रत्युवाच ततः क्रुद्धो मुहूर्तं विह्वलन्निव ॥ ४ ॥ मृते मयि गते रामे वनं मनुजपुङ्गवे । हन्तानार्ये ममामित्रे सकामा सुखिनी भव ॥ ॥ ५ ॥ स्वर्गेऽपि खलु रामस्य कुशलं दैवतैरहम् । प्रत्यादेशादभिहितं धारयिष्ये कथं तव ॥ ६ ॥ कैकेय्याः प्रियकामेन रामः प्रव्राजितो वनम् । यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥७॥ अपुत्रेण मया पुत्रः श्रमेण महता महान् । रामो लब्धो महाबाहुः स कथं त्यज्यते मया ॥ ८ ॥ शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः । कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९ ॥ कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम् । अभिराममहं रामं प्रेषयिष्यामि दण्डकान् ॥ १० ॥ सुखानामुचितस्यैव दुःखैरनुचितस्य च । दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११ ॥ यदि दुःखमकृत्वा तु मम संक्रमणं भवेत् । अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥१२॥ नृशंसे पापसङ्कल्पे रामं सत्यपराक्रमम् । किं विप्रियेण कैकेयि प्रियं योजयसे मम ॥१३॥ अकीर्त्तिरतुला लोके ध्रुवः परिभवश्च मे। तथा विलपतस्तस्य परिभ्रमितचेतसः । अस्तमभ्यगतः सूर्यो रजनी चाभ्यवर्त्तत ॥ १४ ॥ सा त्रियामा तथा तस्य चन्द्रमण्डलमण्डिता । राज्ञो विलपमानस्य न व्यभासत शर्वरी ॥१५॥ तदैवोष्णं विनिश्वस्य वृद्धो दशरथो नृपः । विललापार्तवद्दुःखं गगनासक्तलोचनः ॥१६॥ न प्रभातं तवेच्छामि निशे नक्षत्रभूषिते । क्रियतां मे दया भद्रे मयायं रचिताञ्जलिः ॥ १७ ॥ अथवा गम्यतां शीघ्रं नाहमिच्छामि

निष्टगाम्। नृशंसां कैकयीं दृष्टुं यत्कृते व्यसनं महत्॥ १८॥ एवमुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः। प्रसादयामास पुनः कैकेयीं चेदमब्रवीत्॥१९॥ साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः। प्रसादः क्रियतां भद्रे देवि राज्ञो विशेषतः॥२०॥ शून्येन खलु सुश्रोणि मयेदं समुदाहृतम्। कुरु साधु प्रसादं मे बाले सहृदया ह्यसि॥२१॥ प्रसीद देवि रामोऽपि त्वद्दत्तं राज्यमव्ययम्। लभतामसितापाङ्गे यशः परमवाप्नुहि॥ २२॥ मम रामस्य लोकस्य गुरूणां भरतस्य च। प्रियमेतद्गुरुश्रोणि कुरु चारुमुखेक्षणे॥२३॥ विशुद्धभावस्य हि दुष्टभावा ताम्रेक्षणस्याश्रुकलस्य राज्ञः। श्रुत्वा विचित्रं करुणं विलापं भर्तुर्नृशंसा न चकार वाक्यम्॥ २४॥ ततः स राजा पुनरेव मूर्च्छितः प्रियामतुष्टां प्रतिकूलभाषिणीम्। समीक्ष्य पुत्रस्य विवासनं प्रति क्षितौ विसंज्ञो निपपात दुःखितः॥ २५॥ इतीव राज्ञो व्यथितस्य सा निशा जगाम घोरं श्वसतो मनस्विनः। विबोध्यमानः प्रतिबोधनं तदा निवारयामास स राजसत्तमः॥ २६॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

त्रयोदशः सर्गः।

---

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि। विचेष्टमानमुत्प्रेक्ष्य सैक्ष्वाकुमिदमब्रवीत्॥ १॥ पापं कृत्वेव किमिदं मम संश्रुत्य संश्रवम्। शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि॥२॥ आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः। सत्यमाश्रित्य हि मया त्वं धर्मं प्रति चोदितः॥ ३॥ संश्रुत्य शैव्यः श्येनाय स्वान्तनुं जगतीपतिः। प्रदाय पक्षिणे राजा जगाम

गतिमुत्तमाम् ॥ ४ ॥ तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे। याचमाने स्वके नेत्रे उद्धृत्या विमना ददौ ॥५॥ सरितां तु पतिः स्वल्पां मर्य्यादां सत्यमन्वितः। सत्यानुरोधात् समये वेलां स्वां नातिवर्त्तते ॥ ६ ॥ सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः। सत्यमेवाक्षया वेदाः सत्येनावाप्यते परम् ॥ ७॥ सत्यं समनुवर्त्तस्व यदि धर्मे धृता मतिः। स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम: ॥ ८॥ धर्मस्यैवाभिकामार्थं मम चैवाभिचोदनात्। प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥९॥ समयञ्च ममार्य्येमं यदि त्वं न करिष्यसि। अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १० ॥ एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया। नाशकत्पाशमुन्मोक्तुं वलिरिन्द्रकृतं यथा ॥ ११ ॥ उद्भ्रान्तहृदयश्चापि विवर्णवदनोभवत्। स धुर्यो वै परिस्पन्दन् युगचक्रान्तरं यथा ॥ १२ ॥ विह्वलाभ्यां च नेत्राभ्यामपश्यन्निव भूमिपः। कृच्छ्राद्धैर्य्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३ ॥ यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः। संत्यजामि स्वजञ्चैव तव पुत्रं सह त्वया ॥१४॥ प्रयाता रजनी देवि सूर्य्यस्योदयनं प्रति। अभिषेकं गुरुजनस्त्वरयिष्यति मां ध्रुवम् ॥ १५ ॥ रामाभिषेकसम्भारैस्तदर्थमुपकल्पितैः। रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६ ॥ सपुत्रया त्वया नैव कर्त्तव्या सलिलक्रिया। व्याहन्तास्यशुभाचारे यदि रामाभिषेचनम् ॥ १७ ॥ न शक्तोद्यास्म्यहं द्रष्टुं दृष्ट्वा पूर्वं तथा सुखम्। हतहर्षं निरानन्दं पुनर्जनमवाङ्मुखम् ॥ १८ ॥ तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः। प्रभाता शर्वरी पुण्या चन्द्रनक्षत्रमालिनी ॥ १९ ॥ ततः पापसमाचारा कैकेयी पार्थिवं पुनः। उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्च्छिता ॥ २० ॥ किमिदं भाषसे राजन्वाक्यं गरुजोपमम्। आनाययितुमक्लिष्टं पुत्रं राममिहार्हसि ॥ २१ ॥ स्थाप्य राज्ये मम सुतं

कृत्वा रामवनेचरम् । निःसपत्नां च मां कृत्वा कृतकृत्यो भवि-
ष्यसि ॥ २२ ॥ स तत्र इव तीक्ष्णेन प्रतोदेन हयोत्तमः । राजा
प्रचोदितोभीक्ष्णं कैकेयीमिदमब्रवीत् ॥ २३ ॥ धर्मबन्धेन बद्धो-
ऽस्मि नष्टा च मम चेतना । ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि
धार्मिकम् ॥ २४ ॥ ततः प्रभातां रजनीमुदिते च दिवाकरे ।
पुष्ये नक्षत्रयोगे च मुहूर्त्ते च समागते ॥ २५ ॥ वशिष्ठो गुण-
सम्पन्नः शिष्यैः परिवृतस्तदा । उपगृह्याशु सम्भारान् प्रविवेश
पुरोत्तमम् ॥ २६ ॥ सिक्तसम्मार्जितपथां पताकोत्तमभूषिताम् ।
संहृष्टमनुजोपेतां समृद्धविपणापणाम् ॥ २७ ॥ महोत्सवसमा-
कीर्णां राघवार्थे समुत्सुकाम् । चन्दनागुरुधूपैश्च सर्वतः परि-
धूपिताम् ॥ २८ ॥ तां पुरीं समतिक्रम्य पुरन्दरपुरोपमाम् ।
ददर्शान्तःपुरं श्रीमन्नानाध्वजगणायुतम् ॥ २९ ॥ पौरजान-
पदाकीर्णं ब्राह्मणैरुपशोभितम् । यज्ञविद्भिः सुसंपूर्णं सदस्यैः
परमार्चितैः ॥ ३० ॥ तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् ।
वशिष्ठः परमप्रीतः परमर्षिभिरावृतः ॥ ३१ ॥ स त्वपश्यद्विनिष्क्रा-
न्तं सुमन्त्रं नाम सारथिम् । द्वारे मनुजसिंहस्य सचिवं प्रिय-
दर्शनम् ॥ ३२ ॥ तमुवाच महातेजाः सूतपुत्रं विशारदम् ।
वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ३३ ॥ इमे गङ्गोदक-
घटाः सागरेभ्यश्च काञ्चनाः । औदुम्बरं भद्रपीठमभिषेकार्थ-
माहृतम् ॥ ३४ ॥ सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ।
क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥३५॥ अष्टौ च कन्या
रुचिरा मत्तश्च वरवारणः । चतुरश्वो रथः श्रीमान्निस्त्रिंश-
श्चो धनुरुत्तमम् ॥ ३६ ॥ वाहनं नरसंयुक्तं छत्रञ्च शशिसन्निभम् ।
श्वेते च बालव्यजने भृङ्गारश्च हिरण्मयम् ॥३७॥ हेमदामपिनद्धश्च
ककुद्मान् पाण्डुरो वृषः । केशरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः
॥ ३८ ॥ सिंहासनं व्याघ्रतनुःसमिधश्च हुताशनः । सर्वे वादित्र-

कृष्णाश्च वेश्याश्चालंकृतास्त्रियः ॥ ३९ ॥ आचार्य्या ब्राह्मणा गावः
पुण्याश्च मृगपक्षिणः । पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह
॥ ४० ॥ एते चान्ये च बहवः प्रीयमाणाः प्रियम्वदा ॥४०॥ अभिषे-
काय रामस्य सह तिष्ठन्ति पार्थिवैः ॥ ४१ ॥ त्वरयस्व महाराजं
यथा समुदितेऽहनि । पुष्ये नक्षत्रयोगे च रामो राज्यमवाप्नुयात्
॥ ४२ ॥ इति तस्य वचः श्रुत्वा सूतपुत्रो महात्मनः । स्तुवन्नृपति-
शार्दूलं प्रविवेश निवेशनम् ॥ ४३ ॥ तन्तु पूर्वोदितं वृद्धं द्वारस्था
राजसम्मताः । न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥४४॥
स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् । वाग्भिः परम-
तुष्टाभिरभिष्टोतुं प्रचक्रमे ॥ ४५ ॥ ततः सूतो यथाकालं पार्थि-
वस्य निवेशने । सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम्
॥ ४६ ॥ यथा नन्दति तेजस्वी सागरो भास्करोदये । प्रीतः
प्रीतेन मनसा तथा नन्दय नस्ततः ॥४७॥ इन्द्रमस्यां तु वेलाया-
मभितुष्टाव मातलिः । सोऽजयद्दानवान् सर्वांस्तथा त्वां बोधया-
म्यहम् ॥ ४८ ॥ वेदाः सहाङ्गा विद्याश्च यथा ह्यात्मभुवं प्रभुम् ।
ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥४९॥ आदित्यः सह
चन्द्रेण यथा भूतधरां शुभाम् । बोधयत्यद्य पृथिवीं तथा त्वां
बोधयाम्यहम् ॥ ५० ॥ उत्तिष्ठ सुमहाराज कृतकौतुकमङ्गलः ।
विराजमानो वपुषा मेरोरिव दिवाकरः ॥ ५१ ॥ सोमसूर्यौ च
काकुत्स्थ शिववैश्रवणावपि । वरुणश्चाग्निरिन्द्रश्च विजयं
प्रदिशन्तु ते ॥ ५२ ॥ गता भगवती रात्रिरहः शिवमुपस्थितम् ।
प्रतिबुध्यस्व राजर्षे कृत्यं महदुपस्थितम् ॥ ५३ ॥ उदतिष्ठत
रामस्य समग्रमभिषेचनम् । पौरजानपदैश्चापि नैगमैश्च कृता-
ञ्जलिभिः ॥ ५४ ॥ अयं वसिष्ठो भगवान् ब्राह्मणैः सह तिष्ठति ।
क्षिप्रमाज्ञाप्यतां राजन् राघवस्याभिषेचनम् ॥५५॥ यथा ह्यपालाः
पशवो यथा सेना ह्यनायका । यथा चन्द्रं विना रात्रिर्यथा गावो

विना वृषम् ॥ ५६॥ एवं हि भविता राष्ट्रं यत्र राजा न दृश्यते ।
इति तस्य वचः श्रुत्वा सान्त्वपूर्वमिवार्थवत् ॥ ५७ ॥ अभ्यकीर्यत
त शोकेन भूय एव महीपतिः । ततस्तु राजा तं सूतं सन्नहर्षः सुतं
प्रति ॥ ५८ ॥ शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः ।
वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि ॥ ५९ ॥ सुमन्त्रः
करुणं श्रुत्वा दृष्ट्वा दीनञ्च पार्थिवम् । प्रगृहीतांजलिः किञ्चि-
त्तस्माद्देशादपाक्रमत् ॥ ६० ॥ यदा वक्तुं स्वयं दैन्यान्नशशाक
महीपतिः । तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ६१ ॥
सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः । प्रजागरपरिश्रान्तो
निद्राया वशमागतः ॥ ६२ ॥ तद्गच्छ त्वरितं सूत राजपुत्रं यश-
स्विनम् । राममानय भद्रन्ते नात्र कार्य्या विचारणा ॥ ६३ ॥
अश्रुत्वा राजवचनं कथं गच्छामि भामिनि । तच्छ्रुत्वा मन्त्रिणो
वाक्यं राजा मन्त्रिणमब्रवीत् ॥ ६४ ॥ सुमन्त्र रामं द्रक्ष्यामि
शीघ्रमानय सुन्दरम् । स मन्यमानः कल्याणं हृदयेन ननन्द
च ॥६५॥ निर्जगाम च स प्रीत्या त्वरितो राजशासनात् । सुमन्त्र-
श्चिन्तयामास त्वरितं चोदितस्तया ॥६६॥ व्यक्तं रामाभिषेकार्थ-
मिहायास्यति धर्मभाक् । इति सूतो मतिं कृत्वा हर्षेण महता-
वृतः ॥ ६७॥ निर्जगाम महातेजा राघवस्य दिदृक्षया । सागर-
ह्रदसङ्काशात्सुमन्त्रोऽन्तःपुराच्छुभात् ॥ ६८ ॥ ततः पुरस्तात्सह-
सा विनिःसृतो महीपतेर्द्वारगतान्विलोकयन् । ददर्श पौरा-
न्विविधान्महाजनानुपस्थितान् द्वारमुपेत्य विष्ठितान् ॥६९॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

चतुर्दशः सर्गः ।

---

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः । उपतस्थुरुपस्थानं सहराजपुरोहिताः ॥ १ ॥ अमात्या बलमुख्याश्च मुख्या ये निगमस्य च । राघवस्याभिषेकार्थे प्रीयमाणाः सुसङ्गताः ॥ २ ॥ उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि । लग्ने कर्कटके प्राप्ते जन्मे रामस्य च स्थिते ॥ ३ ॥ अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् । काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् ॥ ४ ॥ रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा । गङ्गायमुनयोः पुण्यात्सङ्गमादाहृतं जलम् ॥५॥ याश्चान्याः सरितः पुण्याः ह्रदाः कूपाः सरांसि च । प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्य्यग्वाहाश्च क्षीरिणः ॥ ॥ ६ ॥ ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः । क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ७ ॥ अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः । सजलाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ॥ ८ ॥ पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा । चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् ॥ ९ ॥ सज्जन्तिष्ठति रामस्य वालव्यजनमुत्तमम् । चन्द्रमण्डलसङ्काशमातपत्रञ्च पाण्डुरम् ॥१०॥ सज्जं द्युतिकरं श्रीमदभिषेकपुरःसरम् । पाण्डुरश्च वृषः सज्जः पाण्डुराश्वश्च संस्थितः ॥ ११ ॥ प्रस्तुतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते । अष्टौ कन्याश्च माङ्गल्याः सर्वाभरणभूषिताः ॥१२॥ वादित्राणि च सर्वाणि वन्दिनश्च तथापरे । इक्ष्वाकूणां यथा राज्ये सम्भ्रियेताभिषेचनम् ॥१३॥ तथा जातीयमादाय राजपुत्राभिषेचनम् । ते राजवचनात्तत्र समवेता महीपतिम् ॥ १४ ॥ अपश्यन्तोऽब्रुवन् को नु राज्ञो नः प्रतिवेदयेत् । न पश्यामश्च राजानमुदितश्च दिवाकरः । १५ ॥ यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः । इति तेषु ब्रुवाणेषु सार्वभौमान्महीपतीन् ॥१६॥ अब्रवीत्तानिदं वाक्यं सुमन्त्रो राजसत्कृतः । रामं राज्ञो नियोगेन त्वरया प्रस्थितो ह्यहम् ॥१७॥ पूज्या राज्ञो भव-

न्तश्च रामस्य तु विशेषत: । अयं पृच्छामि वचनात् सुखमायुष्म-
तामहम् ॥१८॥ राज्ञ: संप्रति बुद्धस्य यच्चानागमकारणम् ।
इत्युक्त्वान्त:पुरद्वारमाजगाम पुराणवित् ।।१९।। सदासक्तञ्च तद्वेश्म
सुमन्त्र: प्रविवेश ह । तुष्टावास्य तदा वंशं सुमन्त्र: स विशाम्पते:
२०।। शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत । सोत्यासाद्य तु तद्वेश्म
तिरस्करणिमन्तरा ।।२१।। आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघ-
वम् ।।२२।। सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि । वरुणा-
श्चाग्निरिन्द्रश्च विजयं प्रदिशंतु ते ।।२३।। यथा साङ्गाश्च वेदा वै
ब्रह्माणं बोधयन्ति ते । तथा त्वां धीर बोध्यामि उत्तिष्ठ पुरुष-
र्षभ ॥ २३ ॥ गता भगवती रात्रिरह: शिवमुपस्थितम् । बुध्यस्व
नरशार्दूल कुरु कार्यमनन्तरम् ।।२४।। ब्राह्मणा बलमुख्याश्च
नैगमाश्चागता नृपा: । दर्शनन्तेभिकांक्षंते प्रतिबुध्यस्व
राघव ॥ २५ ।। स्तुवंतं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् ।
प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ॥ २६ ॥ राममानय
सूतेति यदस्यभिहितोनया । किमिदं कारणं येन ममाज्ञा
प्रतिहन्यते ।।२७।। न चैव संप्रसुप्तोहमानयेहाशु राघ-
वम् । इति राजा दशरथ: सूतं तत्रान्वशात्पुन: ।। २८ ।। स
राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् । निर्जगाम नृपावासा-
न्मन्यमान: प्रियं महत् ।। २९ ।। प्रपन्नो राजमार्गञ्च पताका-
ध्वजशोभितम् । हृष्ट: प्रमुदित: सूतो जगामाशु विलोकयन् ।।३०
स सूतस्तत्र शुश्राव रामाधिकरणा: कथा: । अभिषेचनसंयुक्ता:
सर्वलोकस्य हृष्टवत् ।। ३१ ।। ततो ददर्श रुचिरं कैलाससदृश-
प्रभम् । रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् ।।३२।। महा-
कपाटपिहितं वितर्दिशतशोभितम् । काञ्चनप्रतिमैकाग्रं मणि-
विद्रुमतोरणम् ।।३३।। शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहासमम् ।
मणिभिर्वरमाल्यानां सुमहद्भिरलङ्कृतम् ॥ ३४ ॥ मुक्तामणि-

भिराकीर्णां चन्दनागरुभूषितम् । गन्धान्मनोज्ञान् विसृजद्दा-र्दुरं शिखरं यथा ॥ ३५ ॥ सारसैश्च मयूरैश्च विनदद्भिर्विराजि-तम् । सुकृतेहामृगाकीर्णमुत्कीर्णं भक्तिभिस्तथा ॥ ३६ ॥ मनश्चक्षुश्च भूतानामाददत्तिग्मतेजसा । चन्द्रभास्करसंकाशं कुबेरभवनोपमम् ॥ ३७ ॥ महेन्द्रधामप्रतिमं नानापक्षिसमा-कुलम् । मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह ॥३८॥ उपस्थितैः समाकीर्णां जनैरञ्जलिकारिभिः । उपादाय समाक्रान्तैस्तदा जानपदैर्जनैः ॥ ३९ ॥ रामाभिषेकसुमुखैरुन्मुखैः समलङ्कृतम् । महामेघसमप्रख्यमुदग्रं सुविराजितम् ॥ ४० ॥ नानारत्नसमा-कीर्णं कुब्जकैरपि चावृतं । स वाजियुक्तेन रथेन सारथिर्नरा-कुलं राजकुलं विराजयन् । वरूथिना रामगृहाभियायिना पुरस्य सर्वस्य मनांसि हर्षयन् ॥ ४१ ॥ ततः समासाद्य महाधनं महत् प्रहृष्टरोमा स बभूव सारथिः । मृगैर्मयूरैश्च समाकुलोल्बणं गृहं वरार्हस्य शचीपतेरिव ॥ ४२ ॥ स तत्र कैलासनिभाः स्वलं-कृताः प्रविश्य कक्ष्यास्त्रिदशालयोपमाः । प्रियान्वरान् राममते-स्थितान्बहून् व्यपोह्य शुद्धांतमुपस्थितो रथी ॥ ४३ ॥ स तत्र शुश्राव च हर्षयुक्ता रामाभिषेकार्थकृतां जनानां । नरेन्द्र-सूनोरभिमङ्गलार्थाः सर्वस्य लोकस्य गिरः प्रहृष्टाः ॥ ४४ ॥ महेन्द्रसद्मप्रतिमं तु वेश्म रामस्य रम्यं मृगपक्षिजुष्टं । ददर्श मे-रोरिव शृङ्गमुच्चैर्विभ्राजमानं प्रभया सुमन्त्रः ॥ ४५ ॥ उपस्थितै-रञ्जलिकारिभिश्च सोपायनैर्जानपदैर्जनैश्च । कोट्योपरार्धैश्च विमुक्तयानैः समाकुलं द्वारपदं ददर्श ॥ ४६ ॥ ततो महामेघमही-धराभं प्रभिन्नमत्यंकुशमप्रसह्यं । रामोपवाह्यं रुचिरं ददर्श शत्रुं-जयं नागमुदग्रकायं ॥ ४७ ॥ स्वलङ्कृतान् साश्वरथान् सकुञ्जरान् मातङ्गमुख्यांश्च ददर्श वल्लभान् । व्यपोह्य सूतः स हि तान् समंततः समृद्धमन्तःपुरमाविवेश ॥ ४८ ॥ तदद्रिकूटाचलमेघसन्निभं महा-

विमानोत्तमवेश्मसंघवत् । अवार्य्यमाणः प्रविवेश सारथिः प्रभूत-रत्नं मकरो यथार्णवम् ॥ ४८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

पञ्चदशः सर्गः ।

---

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् । प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ १ ॥ प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्ट-कुण्डलैः । अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २ ॥ तत्र काषायिणो वृद्धान्वेत्रपाणीन् स्वलंकृतान् । ददर्श विष्ठितान् द्वारि त्र्यध्यक्षान् सुसमाहितान् ॥३॥ ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः । सहसोत्पतिताः सर्वे ह्यासनेभ्यः ससंभ्रमाः ॥ ४ ॥ तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः । क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥ ५ ॥ ते राममुपसङ्गम्य भर्त्तुः प्रियचिकीर्षवः । सभार्य्याय च रामाय क्षिप्रमेवाचचक्षिरे ॥ ६ ॥ प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः । तत्रैवानाययामास राघवः प्रियकाम्यया ॥ ७ ॥ तं वैश्रवणसङ्काशमुपविष्टं स्वलंकृतम् । ददर्श सूतः पर्य्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८ ॥ वराहरुधिराभेण शुचिना च सुगन्धिना । अनुलिप्तं परार्द्ध्येन चन्दनेन परन्तपम् ॥ ९ ॥ स्थितया पार्श्वतश्चापि बालव्यजनहस्तया । उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥ १० ॥ साक्षात् शान्त्या समेतं वा धर्मं तं सचराचरम् । अथवा भास्करं दीप्त्या सङ्गतं लोकमायया ॥ ११ ॥ तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा । ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥१२॥ प्राञ्जलिः सुमुखं दृष्ट्वा विहारशयनासने । राजपुत्रमुवाचेदं

सुमन्त्रो राजसत्कृतः ॥ १२ ॥ कौशल्या सुप्रजा राम पिता
त्वां द्रष्टुमिच्छति। महिष्या सह कैकेय्या गम्यतां तत्र
माचिरम् ॥ १३ ॥ एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः।
ततः सम्मानयामास सीतामिदमुवाच ह ॥ १४ ॥ देवि
देवश्च देवी च समागम्य मदन्तरे। मन्त्रयेते ध्रुवं किञ्चि-
दभिषेचनसंहितम् ॥ १५ ॥ लक्षयित्वा ह्यभिप्रायं प्रियकामा
सुदक्षिणा। सञ्चोदयति राजानं मदर्थं मदिरेक्षणे ॥ १६ ॥
सा प्रहृष्टा महाराजं हितकामानुवर्त्तिनी। जननी चार्थकामा मे
केकयाधिपतेः सुता। १७॥ दिष्ट्या खलु महाराजो महिष्या
प्रियया सह। सुमन्त्रं प्राहिणोद्दूतमर्थकामकरं मम ॥ १८ ॥
यादृशी परिषत्तत्र तादृशो दूत आगतः। ध्रुवमद्यैव मां राजा यौव-
राज्येऽभिषेक्ष्यति ॥१९॥ हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च मही-
पतिम्। सह त्वं परिवारेण सुखमास्स्व रमस्व च ॥ २० ॥ पति-
संमानिता सीता भर्तारमसितेक्षणा। आद्वारमनुवव्राज मङ्ग-
लान्यभिदध्युषी ॥ २१ । राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषे-
चनम्। कर्तुमर्हति ते राजा वासवस्येव लोककृत् ॥२२॥ दीक्षितं
व्रतसम्पन्नं वराजिनधरं शुचिम्। कुरङ्गशृङ्गपाणिञ्च पश्यन्ती त्वां
भजाम्यहम् ॥ २३॥ पूर्वां दिशं वज्रधरो दक्षिणां पातु मे यमः।
वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥ २४ । अथ सीता-
मनुज्ञाप्य कृतकौतुकमङ्गलः। निश्चक्राम सुमन्त्रेण सह रामो
निवेशनात्। २५॥ पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः।
लक्ष्मणं द्वारि सोपश्यत्प्रह्वाञ्जलिपुटस्थितम् ॥ २६॥ अथ मध्यम-
कक्ष्यायां समागच्छत्सुहृज्जनैः। स सर्वानर्थिनो दृष्ट्वा समेत्य
प्रतिनन्द्य च ॥ २७॥ ततः पावकसङ्काशमारुरोह रथोत्तमम्।
वैयाघ्रं पुरुषव्याघ्रो राजितं राजनन्दनः ॥ २८ ॥ मेघनादसमं
नादं मणिहेमविभूषितम्। मुष्णन्तमिव चक्षूंषि प्रभया सूर्य-

वर्चसम् ॥ २९ ॥ करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः। हरि-
युक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् ॥ ३० ॥ प्रययौ तूर्णमास्थाय
राघवो ज्वलितः श्रिया। सपर्जन्य इवाकाशे स्वनवानभिनादयन्
॥३१॥ निकेतान्निर्ययौ श्रीमान्महाभ्रादिव चन्द्रमाः। चित्रचाम-
रपाणिस्तु लक्ष्मणो राघवानुगः। जुगोप भ्रातरं भ्राता रथमा-
स्थाय पृष्ठतः ॥ ३२ ॥ ततो हलहलाशब्दस्तुमुलः समजायत।
तस्य निःक्रममाणस्य जनौघस्य समन्ततः ॥ ३३ ॥ ततो हयवरा
मुख्या नागाश्च गिरिसन्निभाः। अनुजग्मुस्तदा रामं शतशोथ
सहस्रशः ॥३४॥ अग्रतश्चास्य सन्नद्धाश्चन्दनागुरुभूषिताः। खड्ग-
चापधराः शूरा जग्मुराशंसवो जनाः ॥ ३५ ॥ ततो वादित्र-
शब्दाश्च स्तुतिशब्दाश्च वन्दिनाम्। सिंहनादाश्च शूराणां ततः
शुश्रुविरे पथि ॥३६॥ हर्म्यवातायनस्थाभिर्भूषिताभिः समन्ततः।
कीर्य्यमाणः सुपुष्पौघैर्ययौ स्त्रीभिररिन्दमः ॥ ३७ ॥ रामं सर्वा-
नवद्याङ्ग्यो रामपिप्रीषया ततः। वचोभिरग्र्यैर्हर्म्यस्थाः क्षिति-
स्थाश्च ववंदिरे ॥ ३८ ॥ नूनं नंदति ते माता कौशल्या मातृ-
नन्दन। पश्यन्ती सिद्धयात्रं त्वां पित्र्यं राज्यमुपस्थितम् ॥३९
सर्वसीमन्तिनीभ्यश्च सीता सीमन्तिनी वरा। अमन्यन्त हि ता
नार्यो रामस्य हृदयप्रियाम् ॥ ४० ॥ तया सुचरितं देव्या पुरा
नूनं महत्तपः। रोहिणीव शशांकेन रामसंयोगमागता ॥ ४१ ॥
इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः। शुश्राव राजमार्गस्थः
प्रिया वाच उदाहृताः ॥४२॥ स राघवस्तत्र कथाप्रलापान् शु-
श्राव लोकस्य समागतस्य। आत्माधिकारा विविधाश्च वाचः
प्रहृष्टरूपस्य पुरे जनस्य ॥ ४३ ॥ एष श्रियं गच्छति राघवोद्य
राजप्रसादाद्विपुलां गमिष्यन्। एते वयं सर्वसमृद्धकामा येषा-
मयं नो भविता प्रशास्ता ॥ ४४ ॥ लाभो जनस्यास्य यदेष सर्वं
प्रपत्स्यते राष्ट्रमिदं चिराय। न ह्यप्रियं किञ्चन जातु कश्चित्

पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥४५॥ स घोषवद्भिश्च हयैः सुनागैः पुरःसरैः स्वस्तिकसूतमागधैः । महीयमानः प्रवरैश्च वादकैरभिष्टुतो वैश्रवणो यथा ययौ ॥ ४६ ॥ करेणुमातङ्गरथाश्वसंकुलं महाजनौघैः प्रतिपूर्णचत्वरम् । प्रभूतरत्नं बहुपुण्यसञ्चयं ददर्श रामो विमलं महापथम् ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

षोडशः सर्गः ।

---

स रामो रथमास्थाय सम्प्रहृष्टसुहृज्जनः । पताकाध्वजसम्पन्नं महार्हागरुधूपितम् ॥ १ ॥ अपश्यन्नगरं श्रीमान्नानाजनसमाकुलम् । स गृहैरभ्रसङ्काशैः पाण्डुरैरुपशोभितम् । राजमार्गं ययौ रामो मध्येनागरुधूपितम् ॥ २ ॥ चन्दनानां च मुख्यानामगरूणां च सञ्चयैः । उत्तमानां च गन्धानां क्षौमकौशाम्बरस्य च ॥ ३ ॥ अविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि । शोभमानमसम्बाधं तं राजपथमुत्तमम् ॥ ४ ॥ संवृतं विविधैः पण्यैर्भक्ष्यैरुच्चावचैरपि । ददर्श तं राजपथं दिवि देवपथं यथा ॥५॥ दध्यक्षतहविर्लाजैर्धूपैरगरुचन्दनैः । नानामाल्योपगन्धैश्च सदाभ्यर्चितचत्वरम् ॥ ६ ॥ आशीर्वादान्बहून् शृण्वन् सुहृद्भिः समुदीरितान् । यथार्हञ्चापि सम्पूज्य सर्वानेव नरान्ययौ ॥ ७ ॥ पितामहैराचरितं तथैव प्रपितामहैः । अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय ॥ ८ ॥ यथा स्म लालिताः पित्रा यथा सर्वैः पितामहैः । ततः सुखतरं सर्वे रामे वत्स्याम राजनि ॥९॥ अलमद्य हि भुक्तेन परमार्थैरलंकृतम् । यथा पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ १० ॥ ततो हि नः प्रियतरं नान्यत्किञ्चिद्भवि-

ष्यति। यथाभिषेको रामस्य राज्ये नामिततेजसः ॥ ११॥ एतांश्चान्यांश्च सुहृदामुदासीनः शुभाः कथाः। आत्मसंपूजनीः शृण्वन् ययौ रामो महापथम् ॥ १२॥ न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात्। नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेपि राघवे ॥ १३ ॥ यश्च रामं न पश्येत्तु यं च रामो न पश्यति। निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते ॥ १४ ॥ सर्वेषु स हि धर्मात्मा वर्णानां कुरुते दयाम्। चतुर्णां हि वयस्थानां तेन ते तमनुव्रताः ॥१५॥ चतुष्पथान्देवपथांश्चैत्यांश्चायतनानि च। प्रदक्षिणं परिहरन् जगाम नृपतेः सुतः ॥ १६ ॥ स राजकुलमासाद्य मेघसङ्घोपमैः शुभैः। प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः ॥ १७ ॥ आवारयद्भिर्गगनं विमानैरिव पाण्डुरैः। वर्द्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ॥ १८। तत् पृथिव्यां गृहवरं महेन्द्रसदनोपमम्। राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ॥ १९ ॥ स कक्ष्या धन्विभिर्गुप्तास्तिस्त्रोतिक्रम्य वाजिभिः। पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ॥२०॥ स सर्वाः समतिक्रम्य कक्ष्या नरवरात्मजः। सन्निवर्त्य जनं सर्वं शुद्धान्तःपुरमत्यगात् ॥२१॥ तस्मिन् प्रविष्टे पितुरन्तिकं तदा। जनः स सर्वो मुदितो नृपात्मजे। प्रतीक्षते तस्य पुनः स्म निर्गमं यथोदयं चन्द्रमसः सरित्पतिः ॥ २२॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तदशः सर्गः।

---

स ददर्शासने रामो निषस्तं पितरं शुभे। कैकेय्या सहितं दीनं मुखेन परिशुष्यता ॥१॥ स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत्। ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥ २ ॥ रामे-

तुरुवाच वचनं वाष्पपर्य्याकुलेक्षणः । शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥३॥ तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् । रामोऽपि भयमापन्नः पदा स्पृष्टेव पन्नगम् ॥४॥ इन्द्रियैरप्रहृष्टैस्तं शोकसन्तापकर्षितम् । निश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५ ॥ ऊर्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम् । उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥ ६ ॥ अचिन्त्यकल्पं हि पितुस्तं शोकमुपधारयन् । बभूव संरब्धतरः समुद्र इव पर्वणि ॥ ७ ॥ चिन्तयामास च ततो रामः पितृहिते रतः । किंस्विदद्यैव नृपतिर्न मां प्रत्यभिनन्दति ॥ ८ ॥ अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति । तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्त्तते ॥ ९ ॥ स दीन इव शोकार्त्तो विषण्णवदनद्युतिः । कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥ १० ॥ कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता । कुपितस्तन्ममाचक्ष्व त्वमेवैनं प्रसादय ॥ ११ ॥ अप्रसन्नमनाः किन्नु सदा मां प्रतिवत्सलः । विषण्णवदनो दीनो न हि मां प्रतिभाषते ॥ १२ ॥ शारीरो मानसो वाऽपि कच्चिदेनं न बाधते । सन्तापो वाऽभितापो वा दुर्लभं हि सदा सुखम् ॥१३॥ कच्चिन्न किञ्चिद्भरते कुमारे प्रियदर्शने । शत्रुघ्ने वा महासत्वे मातॄणां वा ममाशुभम् ॥ १४ ॥ अतोषयन्महाराजमकुर्वन्वा पितुर्वचः । मुहूर्त्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥ १५ ॥ यतो मूलं नरः पश्येत्प्रादुर्भावमिहात्मनः । कथं तस्मिन्न वर्त्तेत प्रत्यक्षे सति दैवते ॥ १६ ॥ कच्चित्ते परुषं किञ्चिदभिमानात्पिता मम । उक्तो भवत्या कोपेन येनास्य लुलितं मनः ॥ १७ ॥ एतदाचक्ष्व मे देवि तत्त्वेन परिपृच्छतः । किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ १८ ॥ एवमुक्ता तु कैकेयी राघवेण महात्मना । उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ १९ ॥ न राजा कुपितो राम व्यसनं नास्य किञ्चन । किञ्चि-

मनोगतं त्वस्य त्वद्भयान्नानुभाषते॥ २०॥ प्रियं त्वामप्रियं वक्तुं
वाणी नास्य प्रवर्त्तते। तदवश्यं त्वया कार्य्यं यदनेन श्रुतं मम
॥ २१॥ एष मह्यं वरं दत्वा पुरा मामभिपूज्य च। स पश्चात्तप्य-
ते राजा यथान्यः प्राकृतस्तथा॥ २२॥ अतिसृज्य ददामीति वरं
मम विशाम्पतिः। स निरर्थं गतजले सेतुं बन्धितुमिच्छति
॥ २३॥ धर्ममूलमिदं राम विदितं च सतामपि। तत्सत्यं न त्य-
जेद्राजा कुपितस्त्वत्कृते यथा॥ २४॥ यदि तद्वक्ष्यते राजा शुभं
वा यदिवाशुभम्। करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम्
॥ २५॥ यदि त्वभिहितं राज्ञा त्वयि तन्न विपद्यते। ततोऽहम-
भिधास्यामि नह्येष त्वयि वक्ष्यति॥ २६॥ एतत्तु वचनं श्रुत्वा
कैकेय्या समुदाहृतम्। उवाच व्यथितो रामस्तां देवीं नृप-
सन्निधौ॥ २७॥ अहो धिङ्नार्हसे देवि वक्तुं मामीदृशं वचः।
अहं हि वचनाद्राज्ञः पतेयमपि पावके॥ २८॥ भक्षयेयं विषं
तीक्ष्णं मज्जेयमपि चार्णवे। नियुक्तो गुरुणा पित्रा नृपेण च
विशेषतः॥ २९॥ तद्ब्रूहि वचनं देवि राज्ञो यदभिकांक्षितम्।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते॥ ३०॥ तमार्जव-
समायुक्तमनार्य्या सत्यवादिनम्। उवाच रामं कैकेयी वचनं
भृशदारुणम्॥ ३१॥ पुरा देवासुरे युद्धे पित्रा ते मम राघव।
रक्षितेन वरौ दत्तौ सशल्येन महारणे॥ ३२॥ तत्र मे याचितो
राजा भरतस्याभिषेचनम्। गमनं दण्डकारण्ये तव चैवाद्य
राघव॥ ३३॥ यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि।
आत्मानञ्च नरश्रेष्ठ मम वाक्यमिदं शृणु॥ ३४॥ सन्निदेशे पितु-
स्तिष्ठ यथानेन प्रतिश्रुतम्। त्वयारण्यं प्रवेष्टव्यं नववर्षाणि पञ्च
च॥ ३५॥ भरतस्याभिषिच्येत यदेतदभिषेचनम्। त्वदर्थे
विहितं राज्ञा तेन सर्वेण राघव॥ ३६॥ सप्त सप्त च वर्षाणि
दण्डकारण्यमाश्रितः। अभिषेकमिदं त्यक्त्वा जटाचीरधरो भव

॥ ३७ ॥ भरतः कोशलपुरे प्रशास्तु वसुधामिमाम् । नानारत्न-
समाकीर्णां सवाजिरथकुञ्जराम् ॥ ३८ ॥ एते न त्वां नरेन्द्रोयं
कारुण्येन समाप्लुतः । शोकैः संक्लिष्टवदनो न शक्नोति निरी-
क्षितुम् ॥ ३९ ॥ एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन । सत्येन
महता राम तारयस्व नरेश्वरम् ॥ ४० ॥ इतीव तस्यां परुषं
वदन्त्यां न चैव रामः प्रविवेश शोकम् । प्रविव्यथे चापि महा-
प्रभावो राजा च पुत्रव्यसनाभितप्तः ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

अष्टादशः सर्गः ।

---

तदप्रियममित्रघ्नो वचनं मरणोपमम् । श्रुत्वा न विव्यथे
रामः कैकेयीं चेदमब्रवीत् ॥ १ ॥ एवमस्तु गमिष्यामि वनं वस्तु-
महं त्वितः । जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २ ॥
इदन्तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः । नाभिनन्दति
दुर्धर्षो यथा पुरमरिन्दमः ॥३॥ मन्युर्न च त्वया कार्य्यो देवि ब्रूमि
तवाग्रतः । यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ४॥ हितेन
गुरुणा पित्रा कृतज्ञेन नृपेण च । नियुज्यमानो विस्रब्धः किं न
कुर्य्यामहं प्रियम् ॥ ५ ॥ अलीकं मानसं त्वेकं हृदयं दहतीव मे ।
स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥ ६ ॥ अहं हि सीतां
राज्यं च प्राणानिष्टान्धनानि च । हृष्टो भ्रात्रे स्वयं दद्यां भर-
ताय प्रचोदितः ॥ ७ ॥ किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचो-
दितः । तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ॥ ८ ॥ तदा-
श्वासय ह्रीमन्तं किञ्चिदं यन्महीपतिः । वसुधासक्तनयनो मन्दम-
श्रूणि मुञ्चति ॥ ९ ॥ गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः ।

भरतं मातुलकुलादद्यैव नृपशासनात् ।। १० ।। दण्डकारण्य-
मेषोऽहमितो गच्छामि सत्वरः । अविचार्य्य पितुर्वाक्यं समावस्तुं
चतुर्दश ॥ ११ ॥ सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य कैकयी ।
प्रस्थानं श्रद्दधाना हि त्वरयामास राघवम् ॥ १२ । एवं भवतु या-
स्यन्ति दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादुपावर्तयितुं
नराः ।। १३ ॥ तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् । राम
तस्मादितः शीघ्रं वनं त्वं गन्तुमर्हसि ॥ १४ ।। व्रीड़ान्वितः स्वयं
यच्च नृपस्त्वां नाभिभाषते । नैतत्किञ्चिन्नरश्रेष्ठ मन्युरेषोपनीय-
ताम् ॥ १५ ।। यावत्त्वं न वनं यातः पुरादस्मादतित्वरन् । पिता
तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ।।१६।। धिक्कष्टमिति निश्वस्य
राजा शोकपरिप्लुतः । मूर्छितोन्यपतत्तस्मिन् पर्य्यंके हेमभूषिते
॥ १७ ॥ रामोप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः । कशयेव
हतो वाजी वनं गन्तुं कृतत्वरः ॥ १८ । तदप्रियमनार्य्याया
वचनं दारुणोदयम् । श्रुत्वा गतव्यथो रामः कैकेयीं वाक्यमब्र-
वीत् ।। १९ ।। नाहमर्थपरो देवि लोकमावस्तुमुत्सहे । विद्धि
मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ।। २० ।। यत्तत्रभवतः
किञ्चिच्छक्यं कर्तुं प्रियं मया । प्राणानपि परित्यज्य सर्वथा
कृतमेव तत् ॥ २१।। न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२ ।। अनुक्तोप्यत्र-
भवता भवत्या वचनादहम् । वने वत्स्यामि विजने वर्षाणीह
चतुर्दश ॥ २३ ॥ न नूनं मयि कैकेयि कञ्चिदाशंससे गुणम् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ।। २४ ॥ यावन्मातरमा-
पृच्छे सीतां चानुनयाम्यहम् । ततोद्यैव गमिष्यामि दण्डकानां
महद्वनम् ।। २५।। भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा । तथा
भवत्या कर्त्तव्यं स हि धर्मः सनातनः ॥ २६ ॥ स रामस्य वचः
श्रुत्वा भृशं दुःखगतः पिता । शोकादशक्नुवन् वाष्पं प्ररुरोद महा-

स्नम् ॥ २७ । वन्दित्वा चरणौ राज्ञो विसंज्ञस्य पितुस्तदा ।
कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युतिः ॥ २८ ॥ स रामः
पितरं कृत्वा कैकेयीं च प्रदक्षिणम् । निष्क्रम्यान्तःपुरात्तस्मा-
त्स्वन्ददर्श सुहृज्जनम् ॥ २९ ॥ तं वाष्पपरिपूर्णाक्षः पृष्ठतोनु-
जगाम ह । लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्द्धनः ॥ ३० ॥
गमने च मतिश्चक्रे वनवासाय लक्ष्मणः । अनुचिन्त्य विना रामं
नाहं जीवितुमुत्सहे ॥ ३१ ॥ अभिषेचनिकं भाण्डं कृत्वा रामः
प्रदक्षिणम् । शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥३२॥
न चास्य महतीं लक्ष्मीं राज्यनाशोपकर्षति । लोककान्तस्य
कान्तत्वाच्छीतरश्मेरिव क्षयः ॥ ३३ ॥ न वनं गन्तुकामस्य त्यज-
तश्च वसुन्धराम् । सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥३४॥
प्रतिषिध्य शुभं छत्रं व्यजने च स्वलंकृते । विसर्जयित्वा स्वजनं
रथं पौरांस्तथा जनान् ॥ ३५ ॥ धारयन्मनसा दुःखमिन्द्रियाणि
निगृह्य च । प्रविवेशात्मवान्वेश्म मातुरप्रियशंसिवान् ॥ ३६ ॥
सर्वो ह्यभिजनः श्रीमान् श्रीमतः सत्यवादिनः । नालक्षयत
रामस्य कञ्चिदाकारमानने ॥ ३७ ॥ उचितञ्च महावाहुर्न जहौ
हर्षमात्मवान् । शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥३८॥
वाचा मधुरया रामः सर्वं सम्मानयञ्जनम् मातुः समीपं धर्मा-
त्मा प्रविवेश महायशाः ॥ ३९ ॥ तं गुणैः समतां प्राप्तो भ्राता
विपुलविक्रमः । सौमित्रिरनुवव्राज धारयन्दुःखमात्मजम् ॥४०॥
प्रविश्य वेश्मातिभृशं मुदा युत समीक्ष्य तां चार्थविपत्तिमागताम् ।
न चैव रामोत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्ति-
शङ्कया ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकोनविंशः सर्गः ।

---

तस्मिंस्तु पुरुषव्याघ्रे निःक्रामति कृताञ्जलौ । आर्त्तशब्दो
महान् जज्ञे स्त्रीणामन्तःपुरे तदा ॥ १ ॥ कृत्येष्वचोदितः पित्रा
सर्वस्यान्तःपुरस्य च । गतिर्यः शरणं चासीत्सरामोद्य प्रवत्-
स्यति ॥ २ ॥ कौशल्यायां यथा युक्तो जनन्यां वर्त्तते सदा ।
तथैव वर्त्ततेस्मासु जन्म प्रभृति राघवः ॥ ३ ॥ न क्रुध्यत्यभि-
शप्तोपि क्रोधनीयानि वर्ज्जयन् । क्रुद्धान् प्रसादयन् सर्वान्
स सुतोद्य प्रवत्स्यति ॥ ४ ॥ अबुद्धिर्वत नो राजा जीवलोकश्चर-
त्ययम् । यो गतिः सर्वभूतानां परित्यजति राघवम् ॥ ५ ॥
इति सर्वा महिष्यास्ता विवत्सा इव धेनवः । पतिमाचुक्रुशुश्चापि
सस्वनं चापि चुक्रुशुः ॥ ६ ॥ स हि चान्तःपुरे घोरमार्त्तशब्दं
महीपतिः । पुत्त्रशोकाभिसन्तप्तः श्रुत्वा व्यालीयतासने ॥ ७ ॥
रामस्तु भृशमायस्तो निश्वसन्निव कुञ्जरः । जगाम सहितो
भ्रात्रा मातुरन्तःपुरं वशी ॥ ८ ॥ सोपश्यत पुरुषं तत्र वृद्धम्प-
रमपूजितम् । उपविष्टं गृहद्वारि तिष्ठतश्चापरान् बहून् ॥ ९ ॥
दृष्ट्वैव तु तदा रामं ते सर्वे समुपस्थिताः । जयेन जयतां श्रेष्ठं
वर्द्धयन्ति स्म राघवम् ॥ १० ॥ प्रविश्य प्रथमां कक्ष्यां द्वितीयायां
ददर्श सः । ब्राह्मणान् वेदसम्पन्नान् वृद्धान् राज्ञाभिसत्कृ-
तान् ॥ ११ ॥ प्रणम्य रामस्तान् वृद्धान् तृतीयायां ददर्श सः ।
स्त्रियो बालाश्च वृद्धाश्च द्वाररक्षणतत्पराः ॥ १२ ॥ वर्द्धयित्वा
प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः । न्यवेदयन्त्यस्त्वरिता राम-
मातुः प्रियं तदा ॥ १३ ॥ कौशल्यापि तदा देवी रात्रिं स्थित्वा
समाहिता । प्रभाते त्वकरोत् पूजां विष्णोः पुत्रहितैषिणी ॥१४॥
सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा । अग्निं जुहोति स्म
तदा मन्त्रवत् कृतमङ्गला ॥ १५ ॥ प्रविश्य तु तदा रामो मातु-
रन्तःपुरं शुभम् । ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥१६॥
देवकार्यनिमित्तञ्च तत्रापश्यत्समुद्यतम् । दध्यक्षतघृतं चैव

मोदकान् हविषस्तथा ॥ १७ ॥ लाजान्माल्यानि शुक्लानि पायसं
कृसरं तथा। समिधः पूर्णकुम्भांश्च ददर्श रघुनन्दनः ॥ १८ ॥
तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्षिताम्। तर्पयन्तीं ददर्शा-
द्भिर्देवतां वरवर्णिनीम् ॥ १९ ॥ सा चिरस्यात्मजं दृष्ट्वा मातृनन्दन-
मागतम्। अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥ २० ॥
स मातरमभिक्रान्तामुपसंगृह्य राघवः। परिष्वक्तश्च बाहुभ्या-
मवघ्रातश्च मूर्धनि ॥ २१ ॥ तमुवाच दुराधर्षं राघवं सुतमा-
त्मनः। कौशल्या पुत्त्रवात्सल्यादिदं प्रियहितं वचः ॥ २२ ॥
वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम्। प्राप्नुह्यायुश्च
कीर्त्तिञ्च धर्मञ्चाप्युचितं कुले ॥ २३ ॥ सत्यप्रतिज्ञं पितरं रा-
जानं पश्य राघव। अद्यैव त्वां स धर्मात्मा यौवराज्येऽभिषे-
क्ष्यति ॥ २४ ॥ दत्तमासनमालभ्य भोजनेन निमन्त्रितः। मातरं
राघवः किञ्चित् प्रसार्याञ्जलिमब्रवीत् ॥ २५ ॥ स स्वभावविनी-
तश्च गौरवाच्च तथा नतः। प्रस्थितो दण्डकारण्यमाप्रष्टुमुप-
चक्रमे ॥ २६ ॥ देवि नूनं न जानीषे महद्भयमुपस्थितम्।
इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥ २७ ॥ गमिष्ये
दण्डकारण्यं किमनेनासनेन मे। विष्टरासनयोग्यो हि का-
लोऽयं मामुपस्थितः ॥ २८ ॥ चतुर्दश हि वर्षाणि वत्स्यामि
विजने वने। मधुमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥२९॥
भरताय महाराजो यौवराज्यं प्रयच्छति। मां पुनर्दण्डकारण्ये
विवासयति तापसम् ॥ ३० ॥ स षड्‌ष्टौ च वर्षाणि वत्स्यामि
विजने वने। आसेवमानो वन्यानि फलमूलैश्च वर्त्तयन् ॥ ३१ ॥
सा निकृत्तेव शालस्य यष्टिः परशुना वने। पपात सहसा
देवी देवतेव दिवश्च्युता ॥ ३२ ॥ तामदुःखोचितां दृष्ट्वा पतितां
कदलीमिव। रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥
उपावृत्त्योत्थितां दीनां वडवामिव वाहिताम्। पांशुगुण्ठितसर्वाङ्गीं

विममर्ष च पाणिना ॥ ३४ ॥ सा राघवमुपासीनमसुखार्त्ता
सुखोचिता। उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ ३५ ॥
यदि पुत्र न जायेथा मम शोकाय राघव। नस्म दुःखमतोभूयः
पश्येयमहमप्रजा ॥ ३६ ॥ एक एव हि बन्ध्यायाः शोको भवति
मानसः। अप्रजास्मीति सन्तापो न ह्यन्यः पुत्र विद्यते ॥ ३७ ॥
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे। अपि पुत्रे विपश्येय-
मिति रामास्थितं मया ॥ ३८ ॥ सा बहून्यमनोज्ञानि वाक्यानि
हृदयच्छिदाम्। अहं श्रोष्ये सपत्नीनामवराणां वरा सती ॥३९॥
अतो दुःखतरं किन्नु प्रमदानां भविष्यति। मम शोको विला-
पश्च यादृशोयमनन्तकः ॥ ४० ॥ त्वयि सन्निहितेप्येवमहमासं
निराकृता। किं पुनः प्रोषिते तात ध्रुवं मरणमेव हि ॥ ४१ ॥
अत्यन्तं निगृहीतास्मि भर्तुर्नित्यमसम्मता। परिचारेण कैकेय्याः
समा वाप्यथवावरा ॥ ४२ ॥ यो हि मां सेवते कश्चिदथवाप्यनु-
वर्त्तते। कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ ४३ ॥
नित्यंक्रोधतया तस्याः कथं नु खरवादिनम्। कैकेय्या वदनं
द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥ ४४ ॥ दश सप्त च वर्षाणि जातस्य
तव राघव। अतीतानि प्रकांक्षन्त्या मया दुःखपरिक्षयम् ॥४५॥
तदक्षयमहं दुःखं नोत्सहे सहितुं चिरात्। विप्रकारं सपत्नी-
नामेवं जीर्णापि राघव ॥ ४६ ॥ अपश्यन्ती तव मुखं परिपूर्ण-
शशिप्रभम्। कृपणा वर्त्तयिष्यामि कथं कृपणजीविकाम् ॥ ४७ ॥
उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः। दुःखसम्वर्द्धितो मोघं
त्वं हि दुर्गतया मया ॥ ४८ ॥ स्थिरन्तु हृदयं मन्ये ममेदं यन्न
दीर्य्यते। प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ ४९ ॥
ममैव नूनं मरणं न विद्यते नचावकाशोस्ति यमक्षये मम। यद-
न्तकोद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥५०॥
स्थिरं हि नूनं हृदयं ममायसं न भिद्यते यद्भुवि नावदीर्य्यते।

अनेन दुःखेन च देहमर्पितं ध्रुवं ह्यकाले मरणं न विद्यते ॥५१॥
इदन्तु दुःखं यदनर्थकानि मे व्रतानि दानानि च संयमाश्च ।
तपश्च तप्तं यदपत्यकाम्यया सुनिष्फलं बीजमिवोप्तमूषरे ॥ ५१ ॥
यदि ह्यकाले मरणं यदृच्छया लभेत कश्चिद्गुरुदुःखकर्षितः ।
गताहमद्यैव परेतसंसदं विना त्वया धेनुरिवात्मजेन वै ॥ ५३ ॥
अथापि किं जीवितमद्य मे वृथा त्वया विना चन्द्रनिभाननप्रभ ।
अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवाभिकाङ्क्षया ॥५४॥
भृशमसुखममर्षिता यदा बहु विललाप समीक्ष्य राघवम् । व्यसन-
मुपनिशम्य सा महत् सुतमिव बद्धमवेक्ष्य किन्नरी ॥ ५५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

विंशः सर्गः ।

---

तदा तु विलपन्तीं तां कौशल्यां राममातरम् । उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १ ॥ न रोचते ममाप्येतदार्ये यद्राघवो वनम् । त्यक्त्वा राज्यश्रियं गच्छेत् स्त्रिया वाक्यवशङ्गतः ॥ २ ॥ विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः । नृपः किमिव न ब्रूयाच्चोद्यमानः समन्मथः ॥ ३ ॥ नास्यापराधं पश्यामि नापि दोषं तथाविधम् । येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥ न तं पश्याम्यहं लोके परोक्षमपि यो नरः । स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ५ ॥ देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम् । अवेक्षमाणः को धर्मं त्यजेत् पुत्रमकारणात् ॥ ६ ॥ तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः । पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७ ॥ यावदेव न जानाति कश्चिदर्थमिमं नरः । तावदेव मया सार्द्ध-

मामस्य कुरु शासनम् ॥ ८ ॥ मया पार्श्वे सधनुषा तव गुप्तस्य राघव । कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९ ॥ निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ । करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १० ॥ भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति । सर्व्वांस्तांश्च बधिष्यामि मृदुर्हि परिभूयते ॥ ११ ॥ प्रोत्साहितोऽयं कैकेय्या सन्तुष्टो यदि नः पिता । अमित्रभूतो निःशङ्कं बध्यतां बध्यतामपि ॥ १२ ॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथं प्रतिपन्नस्य कार्य्यं भवति शासनम् ॥ १३ ॥ बलमेषः किमाश्रित्य हेतुं वा पुरुषोत्तम । दातुमिच्छति कैकेय्या उपस्थितमिदन्तव ॥ १४ ॥ त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् । कास्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १५ ॥ अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः । सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १६ ॥ दीप्तमग्निमरण्यं वा यदि राम प्रवेक्ष्यति । प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १७ ॥ हरामि वीर्य्याद्दुःखं ते तमः सूर्य्य इवोदितम् । देवी पश्यतु मे वीर्य्यं राघवश्चैव पश्यतु ॥ १८ ॥ हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् । कृपणञ्च स्थितं बाल्ये वृद्धभावेन गर्हितम् ॥ १९ ॥ एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः । उवाच रामं कौशल्या रुदती शोकलालसा ॥ २० ॥ भ्रातुस्ते वदतः पुत्त्र लक्ष्मणस्य श्रुतं त्वया । यदत्रानन्तरं तत्त्वं कुरुष्व यदि रोचते ॥२१॥ न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् । विहाय शोकसन्तप्तां गन्तुमर्हसि मामितः ॥ २२ ॥ धर्मज्ञ यदि धर्मिष्ठ धर्मञ्चरितुमिच्छसि । शुश्रूष मामिहस्थस्त्वञ्चर धर्ममनुत्तमम् ॥ २३ ॥ शुश्रूषुर्जननीं पुत्त्रः स्वगृहे नियतो वसन् । परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २४ ॥ यथैव राजा पूज्यस्ते गौरवेण तथा

स्नेहम् । त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २५ ॥
त्वद्वियोगान्न मत्कार्य्यं जीवितेन सुखेन वा । त्वया सह मम
श्रेयस्तृणानामपि भक्षणम् ॥२६॥ यदि त्वं यास्यसि वनं त्यक्त्वा
मां शोकलालसाम् । अहं प्रायमिहासिष्ये न च शक्ष्यामि
जीवितुम् ॥ २७ ॥ ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् ।
ब्रह्महत्यामिवाधर्मात् समुद्रः सरिताम्पतिः ॥ २८ ॥ विल-
पन्तीन्तथा दीनां कौशल्यां जननीं ततः । उवाच रामो धर्मात्मा
वचनं धर्मसंहितम् ॥ २९ ॥ नास्ति शक्तिः पितुर्वाक्यं समति-
क्रमितुं मम । प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥३०॥
ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा । गौर्हता जानता
धर्मं कण्डुना च विपश्चिता ॥ ३१ ॥ अस्माकन्तु कुले पूर्वं सग-
रस्याज्ञया पितुः । खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥३२॥
जामदग्न्येन रामेण रेणुका जननी स्वयम् । कृत्ता परशुना-
रण्ये पितुर्वचनकारिणा । ३३ ॥ एतैरन्यैश्च बहुभिर्देवि देव-
समैः कृतम् । पितुर्वचनमक्लीवं करिष्यामि पितुर्हितम् ॥ ३४ ॥
न खल्वेतन्मयैकेन क्रियते पितृशासनम् । एतैरपि कृतं देवि
ये मया परिकीर्त्तिताः ॥ ३५ ॥ नाहं धर्ममपूर्वन्ते प्रतिकूलं
प्रवर्त्तये । पूर्वैरयमभिप्रेतो गतो मार्गोनुगम्यते ॥ ३६ ॥ तदे-
तत्तु मया कार्य्यं क्रियते भुवि नान्यथा । पितुर्हि वचनं कुर्वन्न
कश्चिन्नामहीयते ॥ ३७ ॥ तामेवमुक्त्वा जननीं लक्ष्मणं पुनर-
ब्रवीत् । वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ३८ ॥
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् । विक्रमञ्चैव सत्वञ्च
तेजश्चैव दुरासदम् ॥ ३९ ॥ मम मातुर्महद्दुःखमतुलं शुभ-
लक्षण । अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ४० ॥
धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् । धर्मसंश्रितमप्ये-
तत् पितुर्वचनमुत्तमम् ॥ ४१ ॥ संश्रुत्य च पितुर्वाक्यं मातुर्वा

ब्राह्मणस्य वा। न कर्त्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥४२॥ सोऽहं न शक्ष्यामि पुनर्नियोगमतिवर्त्तितुम्। पितुर्हि वचनाद्वीर कैकेय्या च प्रचोदितः ॥ ४३ ॥ तदेतां विसृजानार्य्यां चत्रधर्माश्रितां मतिम्। धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४४ ॥ तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः। उवाच भूयः कौशल्यां प्राञ्जलिः शिरसा नतः ॥ ४५ ॥ अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम्। शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४६ ॥ तीर्णप्रतिज्ञश्च वनात् पुनरेष्याम्यहं पुरीम्। ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४७ ॥ शोकः सन्धार्य्यतां मातर्हृदये साधु माशुचः। वनवासादिहैष्यामि पुनः कृत्वा पितुर्वचः ॥ ४८ ॥ त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया। पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४९ ॥ अम्ब संहृत्य सम्भारान् दुःखं हृदि निगृह्य च। वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्त्यताम् ॥ ५० ॥ एतद्वचस्तस्य निशम्य माता सुधर्म्यमव्यग्रमविक्लवञ्च। मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच ॥ ५१ ॥ यथैव ते पुत्त्र पिता तथाहं गुरुः स्वधर्मेण सुहृत्तया च। न त्वानुजानामि न मां विहाय सुदुःखितामर्हसि गन्तुमेव ॥ ५२ ॥ किं जीवितेनेह विना त्वया मे लोकेन वा किं स्वधयामृतेन। श्रेयो मुहूर्त्तं तव सन्निधानं ममेह कृत्स्नादपि जीवलोकात् ॥ ५३ ॥ नरैरिवोल्काभिरपोह्यमानो महागजो ध्वान्तमभिप्रविष्टः। भूयः प्रजज्वाल विलापमेवं निशम्य रामः करुणं जनन्याः ॥ ५४ ॥ स मातरञ्चैव विसंज्ञकल्पामार्त्तञ्च सौमित्रिमभिप्रतप्तम्। धर्मे स्थितो धर्म्यमुवाच वाक्यं तथा स एवार्हति तच्च वक्तुम् ॥ ५५ ॥ अहं हि ते लक्ष्मण नित्यमेव जानामि भक्तिञ्च पराक्रमञ्च। मम त्वभिप्रायमसंनिरीक्ष्य मात्रा सहाभ्यर्दसि मां सुदुःखम् ॥ ५६ ॥ धर्मार्थ-

कामः खलु तात लोके समीक्षिता धर्मफलोदयेषु। ये तत्र
सर्वे स्युरसंशयं मे भार्येव वश्याभिमता सपुत्रा ॥ ५७ ॥
यस्मिंस्तु सर्वे स्युरसन्निविष्टा धर्मो यतः स्यात्तदुपक्रमेत। द्वेष्यो
भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता ॥ ५८ ॥
गुरुश्च राजा च पिता च वृद्धः क्रोधात् प्रहर्षादथवापि कामात्।
यद्व्यादिशेत् कार्य्यमवेक्ष्य धर्मं कस्तं न कुर्य्यादनृशंसवृत्तिः ॥५९॥
स वै न शक्नोमि पितुः प्रतिज्ञामिमां न कर्तुं सकलां यथावत्।
स ह्यावयोस्तात गुरुर्नियोगे देव्याश्च भर्त्ता स गतिः स धर्मः ॥६०॥
तस्मिन् पुनर्जीवति धर्मराजे विशेषतः स्वे पथि वर्त्तमाने। देवी
मया सार्द्धमितोनुगच्छेत् कथंस्विदन्या विधवेव नारी ॥ ६१ ॥
सा मानुमन्यस्व वनं व्रजन्तं कुरुष्व नः स्वस्त्ययनानि देवि। यथा
समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥ ६२ ॥ यशो
ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम्। अ-
दीर्घकालेन तु देवि जीविते वृणे वरामद्य महीमधर्मतः ॥ ६३ ॥
प्रसादयन्नरवृषभः स मातरं पराक्रमाज्जिगमिषुरेव दण्डकान्।
अथानुजं भृशमनुशास्य दर्शनं चकार तां हृदि जननीं प्रद-
क्षिणम् ॥ ६४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकविंशः सर्गः।

---

अथ तं व्यथया दीनं सविशेषममर्षितम्। श्वसन्तमिव
नागेन्द्रं रोषविस्फारितेक्षणम् ॥ १ ॥ आसाद्य रामः सौमित्रिं
सुहृदं भ्रातरं प्रियम्। उवाचेदं स धैर्य्येण धारयन् सत्त्व-
मात्मवान् ॥ २ ॥ निगृह्य रोषं शोकञ्च धैर्य्यमाश्रित्य केवलम्।

अवमानं निरस्यैनं गृहीत्वा हर्षमुत्तमम् ॥ ३ ॥ उपक्लृप्तं यदे-
तन्मे अभिषेकार्थमुत्तमम्। सर्वं निवर्त्तय क्षिप्रं कुरु कार्य्यं
निरत्ययम् ॥ ४ ॥ सौमित्रे योभिषेकार्थे मम सम्भारसम्भ्रमः।
अभिषेकनिवृत्त्यर्थे सोस्तु सम्भारसम्भ्रमः ॥ ५ ॥ यस्या मदभि-
षेकार्थे मानसं परितप्यते। माता नः सा यथा न स्यात् सवि-
शङ्का तथा कुरु ॥ ६ ॥ तस्याः शङ्कामयं दुःखं मुहूर्त्तमपि
नोत्सहे। मनसि प्रतिसञ्जातं सौमित्रेहमुदीक्षितुम् ॥ ७ ॥
न बुद्धिपूर्वं नाबुद्धः स्मरामीह कदाचन। मातृणां वा पितु-
र्वाहं कृतं बाल्यञ्च विप्रियम् ॥ ८ ॥ सत्यः सत्याभिसन्धश्च नित्यं
सत्यपराक्रमः। परलोकभयाद्भीतो निर्भयस्तु पिता मम ॥ ९ ॥
तस्यापि हि भवेदस्मिन् कर्मण्यप्रतिसंहृते। सत्यं नेति मन-
स्तापस्तस्य तापस्तपेच्च माम् ॥ १० ॥ अभिषेकविधानन्तु तस्मात्
संहृत्य लक्ष्मण। अन्वगेवाहमिच्छामि वनं गन्तुमितः पुरः ॥११॥
मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा। सुतं भरतमव्यग्रमभि-
षेचयतां ततः ॥ १२ ॥ मयि चीराजिनधरे जटामण्डलधारिणि।
गतेऽरण्यञ्च कैकेय्या भविष्यति मनःसुखम् ॥ १३ ॥ बुद्धिः
प्रणीता येनेयं मनश्च सुसमाहितम्। तन्तु नार्हति संक्लेष्टुं प्रव्र-
जिष्यामि माचिरम् ॥१४॥ कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मद्वि-
वासने। राज्यस्य च वितीर्णस्य पुनरेव निवर्त्तने ॥ १५ ॥
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीड़ने। यदि तस्या न
भावोयं कृतान्तविहितो भवेत् ॥ १६ ॥ जानासि हि यथा
सौम्य न मातृषु ममान्तरम्। भूतपूर्वं विशेषो वा तस्या मयि
सुतेपि वा ॥ १७ ॥ सोभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः।
उग्रैर्वाक्यैरहं तस्मान्नान्यं दैवात् समर्थये ॥ १८ ॥ कथं प्रकृति-
सम्पन्ना राजपुत्त्री तथागुणा। ब्रूयात् सा प्राकृतेव स्त्री मत्-
पीड़ां भर्तृसन्निधौ ॥ १९ ॥ यदचिन्त्यन्तु तद्दैवं भूतेष्वपि न

लक्ष्यते। व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः॥ २०॥
कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान्। यस्य न ग्रहणं कि-
ञ्चित्कर्मणोऽन्यत्र दृश्यते॥ २१॥ सुखदुःखे भयक्रोधौ लाभा-
लाभौ भवाभवौ। यच्च किञ्चित्तथाभूतं ननु दैवस्य कर्म तत्॥२२॥
ऋषयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः। उत्सृज्य नियमांस्ती-
व्रान् भ्रश्यन्ते काममन्युभिः॥ २३॥ असङ्कल्पितमेवेह यद-
कस्मात् प्रवर्त्तते। निवर्त्त्यारम्भमारब्धं ननु दैवस्य कर्म तत्॥२४॥
एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना। व्याहतेऽप्यभिषेके मे
परितापो न विद्यते॥ २५॥ तस्मादपरितापः सन् त्वमप्यनु-
विधाय माम्। प्रतिसंहारय क्षिप्रमभिषेचनिकीं क्रियाम्॥२६॥
एभिरेव घटैः सर्वैरभिषेचनसम्भृतैः। मम लक्ष्मण तापस्ये
व्रतस्नानं भविष्यति॥ २७॥ अथवा किं ममैतेन राज्यद्रव्य-
मयेन तु। उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति॥ २८॥
मा च लक्ष्मण सन्तापं कार्षीर्लक्ष्म्या विपर्यये। राज्यं वा वन-
वासो वा वनवासो महोदयः॥ २९॥ न लक्ष्मणास्मिन् मम
राज्यविघ्ने माता यवीयस्यतिशङ्कितव्या। दैवाभिपन्ना हि
वदत्यनिष्टं जानासि दैवं हि तथाप्रभावम्॥ ३०॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

द्वाविंशः सर्गः।

---

इति ब्रुवति रामे तु लक्ष्मणोऽधःशिरा स्तदा। श्रुत्वा मध्यं
जगामेव मनसा दुःखहर्षयोः॥ १॥ तदा तु बद्ध्वा भ्रुकुटीं
भ्रुवोर्मध्ये नरर्षभः। निशश्वास महासर्पो बिलस्थ इव

रोषितः ॥ २ ॥ तस्य दुष्प्रतिवीक्ष्यन्तत् भ्रुकुटिसहितं तदा। बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥ अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः। तिर्य्यगूर्द्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥ ४ ॥ अग्राक्ष्णा वीक्षमाणस्तु तिर्य्यग्भ्रातरमब्रवीत्। अस्थाने सम्भ्रमो यस्य जातो वै सुमहानयम् ॥ ५ ॥ धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया। कथं ह्येतदसम्भ्रान्तस्त्वद्विधो वक्तुमर्हति ॥ ६ ॥ यथा ह्येवमशौण्डीरं शौण्डीरः क्षत्रियर्षभः। किन्नाम कृपणं दैवमशक्तमभिशंससि ॥ ७ ॥ पापयोस्ते कथं नाम तयोः शङ्का न विद्यते। सन्ति धर्मोपधाः श्लक्ष्णा धर्मात्मन् किं न बुध्यसे ॥ ८ ॥ तयोः सुचरितं स्वार्थं शाठ्यात् परिजिहीर्षतोः। यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव ॥ ९ ॥ तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः। लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् ॥ १० ॥ नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि ॥ ११ ॥ येनैवमागता द्वैधं तव बुद्धिर्महामते। सोपि धर्मो मम द्वेष्यो यत्प्रसङ्गाद्विमुह्यसि ॥ १२ ॥ कथं त्वं कर्म्मणा शक्तः कैकेयी वशवर्त्तिनः। करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ॥ १३ ॥ यदयं किल्बिषाद्भेदः कृतोप्येवं न गृह्यते। जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः ॥ १४ ॥ तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः। मनसापि कथं कामं कुर्य्यास्त्वां कामवृत्तयोः ॥ १५ ॥ तयोस्त्वहितयोर्नित्यं शत्रोः पित्रभिधानयोः। यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम्। तथाप्युपेक्षणीयं ते न मे तदपि रोचते ॥ १६ ॥ विक्लवो वीर्य्यहीनो यः स दैवमनुवर्त्तते। वीराः सम्भावितात्मानो न दैवं पर्य्युपासते ॥ १७ ॥ दैवं पुरुषकारेण यः समर्थः प्रबाधितुम्। न दैवेन विपन्नार्थः पुरुषः सोवसीदति ॥ १८ ॥ द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरु-

मस्य च। दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति॥ १९॥
अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः। यद्दैवादाहतं तेऽद्य
दृष्टं राज्याभिषेचनम्॥ २०॥ अत्यंकुशमिवोद्दामं गजं मदज-
लोद्धतम्। प्रधावितमहं दैवं पौरुषेण निवर्त्तये॥ २०॥
लोकपालाः समस्तास्ते नाद्य रामाभिषेचनम्। नच कृत्स्ना-
स्त्रयो लोका विहन्युः किं पुनः पिता॥ २२॥ यैर्विवासस्तवा-
रण्ये मिथो राजन् समर्थितः। अरण्ये ते विवत्स्यन्ति चतुर्दश-
समास्तथा॥ २३॥ अहं तदाशान्धक्ष्यामि पितुस्तस्याश्च या तव।
अभिषेकविघातेन पुत्रराज्याय वर्त्तते॥ २४॥ मद्बलेन
विरुद्धाय न स्याद्दैवबलं तथा। प्रभविष्यति दुःखाय यथोग्रं
पौरुषं मम॥ २५॥ ऊर्द्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम्।
आर्य्यपुत्राः करिष्यन्ति वनवासं गते त्वयि॥ २६॥ पूर्वरा-
जर्षिवृत्त्या हि वनवासो विधीयते। प्रजा निःक्षिप्य पुत्रेषु पुत्र-
वत्परिपालने॥ २७॥ स चेद्राजन्यनेकाग्रे राज्यविभ्रमश-
ङ्कया। नैवमिच्छसि धर्मात्मन् राज्यं राम त्वमात्मनि॥ २८॥
प्रतिजाने च ते वीर माभूवं वीरलोकभाक्। राज्यञ्च तव रक्षेय-
महं वेलेव सागरम्॥ २९॥ मङ्गलैरभिषिञ्चस्व तत्र त्वं व्या-
पृतो भव। अहमेको महीपालानलं वारयितुं बलात्॥ ३०॥
न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे। नासिराबन्धना-
र्थाय न शरास्तम्भहेतवः। अमित्रमथनार्थं मे सर्वमेतच्च-
तुष्टयम्॥ ३१॥ न चाहं कामयेत्यर्थं यः स्याच्छत्रुर्मतो मम।
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा॥ ३२॥ प्रगृह्णीतेन
वै शत्रुं वज्रिणं वा न कल्पये॥ ३३॥ खड्गनिष्पेषनिष्पिष्टै-
र्गहना दुश्चरा च मे। हस्त्यश्वरथहस्तोरुशिरोभिर्भविता
मही॥ ३४॥ खड्गधाराहता मेद्य दीप्यमाना इवाद्रयः।
पतिष्यन्ति द्विषो भूमौ मेघा इव सविद्युतः॥ ३५॥ बद्धा

गोधाङ्गुलित्राणे प्रगृहीतशरासने। कथं पुरुषमानी स्यात् पुरुषाणां मयि स्थिते ॥ ३६ ॥ बहुभिश्चैकमत्यस्यन् लोके न च बहून् जनान्। विनियोक्ष्याम्यहं बाणान्नृवाजिगजमर्मसु ॥ ३७ ॥ अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति। राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वञ्च तव प्रभो ॥ ३८ ॥ अद्य चन्दनसारस्य केयूरामोक्षणस्य च। वसूनाञ्च विमोक्षस्य सुहृदां पालनस्य च ॥ ३९ ॥ अनुरूपाविमौ बाहू राम कर्म करिष्यतः। अभिषेचनविघ्नस्य कर्तॄणान्ते निवारणे ॥ ४० ॥ ब्रवीहि कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशः सुहृज्जनैः। यथा तवेयं वसुधा वशा भवेत्तथैव मां शाधि तवास्मि किंकरः ॥ ४१ ॥ विमृज्य बाष्पं परिसान्त्व्य चासकृत् स लक्ष्मणं राघववंशवर्द्धनः। उवाच पित्रोर्वचने व्यवस्थितं निबोध मामेष हि सौम्य सत्पथः ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

त्रयोविंशः सर्गः।

---

तं समीक्ष्य व्यवसितं पितुर्निर्देशपालने। कौशल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥ अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः। मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत् ॥ २ ॥ यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते। कथं स भोक्ष्यते रामो वने मूलफलान्ययम् ॥ ३ ॥ क एतत् श्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम्। गुणवान् दयितो राज्ञो राघवो यद्विवास्यते ॥ ४ ॥ नूनं तु बलवान् लोके कृतान्तः सर्वमादिशन्। लोके रामाभिरामस्त्वं वनं यत्र गमिष्यति ॥ ५ ॥ अयं

तु मामात्मभवस्तवादर्शनमारुतः। विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥ चिन्तावाष्पमहाधूमस्तवादर्शनचित्तजः। कर्षयित्वा भृशं पुत्र निश्वासायाससम्भवः ॥ ७ ॥ त्वया विहीनामिह मां शोकाग्निरतुलो महान्। प्रधक्ष्यति यथा कक्षं चित्रभानुर्हिमात्यये ॥ ८ ॥ कथं हि धेनुः स्वं वत्सं गच्छन्तमनुगच्छति। अहं त्वानुगमिष्यामि यत्र वत्स गमिष्यसि ॥ ९ ॥ यथा निगदितं माता तद्वाक्यं पुरुषर्षभः। श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १० ॥ कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते। भवत्या च परित्यक्तो न नूनं वर्त्तयिष्यति ॥ ११ ॥ भर्तुः पुनः परित्यागो नृशंसः केवलं स्त्रियाः। स भवत्या न कर्त्तव्यो मनसापि विगर्हितः ॥ १२ ॥ यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः। शुश्रूषा क्रियतां तावत् स हि धर्मः सनातनः ॥ १३ ॥ एवमुक्ता तु रामेण कौशल्या शुभदर्शना। तथेत्युवाच सुप्रीता राममक्लिष्टकारिणम् ॥ १४ ॥ एवमुक्तस्तु वचनं रामो धर्मभृताम्बरः। भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥ मया चैव भवत्या च कर्त्तव्यं वचनं पितुः। राजा भर्त्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥ इमानि तु महारण्ये विहृत्य नव पञ्च च। वर्षाणि परमप्रीत्या स्थास्यामि वचने तव ॥ १७ ॥ एवमुक्ता प्रियं पुत्रं वाष्पपूर्णानना तदा। उवाच परमार्त्ता तु कौशल्या सुतवत्सला ॥ १८ ॥ आसां राम सपत्नीनां मध्ये वस्तुं न मे क्षमम्। नय मामपि काकुत्स्थ वनं वन्यां मृगीमिव ॥ १९ ॥ यदि ते गमने बुद्धिः कृता पितुरपेक्षया। तां तथा रुदतीं रामो रुदन्वचनमब्रवीत् ॥ २० ॥ जीवन्त्या हि स्त्रिया भर्त्ता दैवतं प्रभुरेव च। भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २१ ॥ न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता ॥ २२ ॥ भरतश्चापि

धर्मात्मा सर्वभूतप्रियंवदः। भवतीमनुवर्त्तेत स हि धर्मरतः सदा॥ २३॥ यथा मयि तु निःक्रान्ते पुत्त्रशोकेन पार्थिवः। श्रमं नावाप्नुयात् किञ्चिदप्रमत्ता तथा कुरु॥ २४॥ दारुण-श्चाप्ययं शोको यथैनं न विनाशयेत्। राज्ञो वृद्धस्य सततं हितम्चर समाहिता॥ २५॥ व्रतोपवासनिरता या नारी परमोत्तमा। भर्त्तारं नानुवर्त्तेत सा च पापगतिर्भवेत्॥२६॥ भर्तुः शुश्रूषया नारी लभते गतिमुत्तमम्। अपि या निर्नम-स्कारा निवृत्ता देवपूजनात्॥ २७॥ शुश्रूषामेव कुर्व्वीत भर्तुः प्रियहिते रता। एष धर्मः पुरा दृष्टो वेदे लोके श्रुतः स्मृतः॥ २८॥ अग्निकार्य्येषु च सदा सुमनोभिश्च देवताः। पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सुव्रताः॥२९॥ एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी। नियता नियताहारा भर्त्तृ-शुश्रूषणे रता॥ ३०॥ प्राप्स्यसे परमं कामं मयि प्रत्यागते सति। यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम्॥ ३१॥ एवमुक्ता तु रामेण वाष्पपूर्णायतेक्षणा। कौशल्या पुत्त्रशो-कार्त्ता रामं वचनमब्रवीत्॥ ३२॥ गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्त्रक। विनिवर्त्तयितुं वीर नूनं कालो दुरत्ययः॥३३॥ गच्छ पुत्त्र त्वमेकाग्रो भद्रन्तेऽस्तु सदा विभो। पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा॥ ३४॥ प्रत्यागते महाभागे कृतार्थे चरितव्रते। पितुरानृण्यतां प्राप्ते त्वयि लप्स्ये परं सुखम्॥ ३५॥ कृतान्तस्य गतिः पुत्त्र दुर्विभाव्या सदा भुवि। यस्त्वां सञ्चोद-यति मे वच आच्छिद्य राघव॥ ३६॥ गच्छेदानीं महाबाहो क्षेमेण पुनरागतः। नन्दयिष्यसि मां पुत्त्र साम्ना श्लक्ष्णेन चेतसा॥ ३७॥ अपीदानीं स कालः स्याद्वनात्प्रत्यागतं पुनः। येन त्वां पुत्त्र पश्येयं जटावल्कलधारिणम्॥ ३८॥ तथा हि रामं वनवासनिश्चितं समीक्ष्य देवी परमेण

चेतसा। उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभि-
काङ्क्षिणी ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
चतुर्विंशः सर्गः।

—०—

सा विनीय तमायासमुपस्पृश्य जलं शुचि। चकार माता
रामस्य मङ्गलानि मनस्विनी ॥ १ ॥ न शक्यते वारयितुं गच्छे-
दानीं रघूत्तम। शीघ्रञ्च विनिवर्त्तस्व वर्त्तस्व च सतां क्रमे ॥२॥
यं पालयसि धर्मं त्वं धृत्या च नियमेन च। स वै राघवशार्दूल
धर्मस्त्वामभिरक्षतु ॥ ३ ॥ येभ्यः प्रणमसे पुत्त्र चैत्येष्वायतनेषु
च। ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥ यानि
दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता। तानि त्वामभि-
रक्षन्तु गुणैः समुदितं सदा ॥ ५ ॥ पितृशुश्रूषया पुत्त्र मातृ-
शुश्रूषया तथा। सत्येन च महाबाहो चिरञ्जीवाभिरक्षितः ॥६॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च। स्थण्डिलानि च
विप्राणां शैला वृक्षा ह्रदाः क्षयाः ॥ ७ ॥ पतङ्गाः पन्नगाः
सिंहास्त्वां रक्षन्तु नरोत्तम। स्वस्ति साध्याश्च विश्वे च मरुतश्च
महर्षिभिः ॥ ८ ॥ स्वस्ति धाता विधाता च स्वस्ति पूषा भगो-
ऽर्यमा। लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा ॥ ९ ॥ ऋतवः
षट् च ते सर्वे मासाः सम्वत्सराः क्षपाः। दिनानि च मुहू-
र्त्ताश्च स्वस्ति कुर्वन्तु ते सदा ॥ १० ॥ नक्षत्राणि च सर्वाणि
ग्रहाश्च सह दैवतैः। श्रुतिः स्मृतिश्च धर्मश्च पातु त्वां पुत्त्र
सर्वतः ॥ ११ ॥ स्कन्दश्च भगवान् देवः सोमश्चन्द्रो बृहस्पतिः।
सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ १२ ॥ ते चापि सर्वतः

स्त्रिहा दिशश्च सदिगीश्वराः । स्तुता मया वने तस्मिन् पान्तु
त्वां पुत्त्र नित्यशः ॥१३॥ शैलाः सर्वे समुद्राश्च राजा वरुण एव
च । द्यौरन्तरिक्षं पृथिवी वायुश्च सचराचरः ॥ १४ ॥ अहो-
रात्रे तथा सन्ध्या पान्तु त्वां वनमाश्रितम् । कलाश्च काष्ठाश्च
तथा तव शर्म दिशन्तु ते ॥ १५ ॥ महावने विचरतो मुनि-
वेशस्य धीमतः । तथादित्याश्च दैत्याश्च भवन्तु सुखदाः सदा ॥१६॥
राक्षसानां पिशाचानां दैत्यानां क्रूरकर्मणाम् । क्रव्यादानां
च सर्वेषां माभूत् पुत्त्रक ते भयम् ॥ १७ ॥ प्लवङ्गा वृश्चिका दंशा
मशकाश्चैव कानने । सरीसृपाश्च कीटाश्च माभूवन् गहने
तव ॥ १८ ॥ महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः ।
महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्त्रक ॥ १९ ॥ नृमांस-
भोजना रौद्रा ये चान्ये सर्पजातयः । मा च त्वां हिंसिषुः पुत्त्र
मया सम्पूजितास्त्विह ॥ २० ॥ आगमास्ते शिवाः सन्तु सिध्यन्तु
च पराक्रमाः । सर्वसम्पत्तयो राम स्वस्तिमान् गच्छ पुत्रक ॥२१॥
स्वस्ति तेऽस्त्वन्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः । सर्वेभ्यश्चैव
देवेभ्यो ये च ते परिपन्थिनः ॥ २२ ॥ शुक्रः सोमश्च सूर्यश्च
धनदोऽथ यमस्तथा । पांतु त्वामर्च्चिता राम दण्डकारण्य-
वासिनम् ॥ २३ ॥ अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखात्
च्युताः । उपस्पर्शनकाले तु त्वां रक्षन्तु रघूत्तम ॥ २४ ॥
सर्वलोकप्रभुर्ब्रह्मा भूतकर्त्ता तथार्षयः । ये च शेषाःसुरास्ते
तु रक्षन्तु वनवासिनम् ॥ २५ । इति माल्यैः सुरगणान्
गन्धैश्चापि यशस्विनी । स्तुतिभिश्चानुरूपाभिरानर्च्चायतलो-
चना ॥ २६ ॥ ज्वलनं समुपादाय ब्राह्मणेन महात्मना । हा-
वयामास विधिना राममङ्गलकारणात् ॥ २७ ॥ घृतं श्वेतानि
माल्यानि समिधः श्वेतसर्षपान् । उपसम्पादयामास कौशल्या
परमाङ्गना ॥ २८ ॥ उपाध्यायः सविधिना हुत्वा शान्तिमना-

मयम् । श्रुतहव्यावशेषेण वाह्यं बलिमकल्पयत् ॥ २९ ॥
मधुदध्यक्षतघृतैः स्वस्ति वाच्य द्विजांस्ततः । वाचयामास
रामस्य वने स्वस्त्ययनक्रियाम् ॥ ३० ॥ ततस्तस्मै द्विजेन्द्राय
माता तस्य यशस्विनी । दक्षिणां प्रददौ काम्यां राघवं चेद-
मब्रवीत् ॥ ३१ ॥ यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्र-
नाशे समभवत् तत्ते भवतु मङ्गलम् ॥ ३२ ॥ यन्मङ्गलं सुप-
र्णस्य विनताकल्पयत् पुरा । अमृतं प्रार्थयानस्य तत्ते भवतु
मङ्गलम् ॥ ३३ ॥ अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ३४ ॥ त्रिविक्रमान्
प्रक्रमतो विष्णोरतुलतेजसः । यदासीन्मङ्गलं राम तत्ते भवतु
मङ्गलम् ॥ ३५ ॥ ऋषयः सागरा द्वीपा वेदा लोका दिशश्च ताः ।
मङ्गलानि महाबाहो दिशन्तु शुभमङ्गलम् ॥ ३६ ॥ इति
पुत्रस्य सिद्धार्थां विशल्यकरणीं तथा । ओषधिं च सुशेषाञ्च
कृत्वा शिरसि भामिनी ॥ ३७ ॥ गन्धैश्चापि समालभ्य राम-
मायतलोचना । चकार रक्षां कौशल्या मन्त्रैरभिजजाप च ॥३८॥
उवाचापि प्रहृष्टेव सा दुःखवशवर्त्तिनी । वाङ्मात्रेण न भावेन
वाचा संसज्जमानया ॥ ३९ ॥ आनम्य मूर्ध्नि चाघ्राय परिष्वज्य
यशस्विनी । अवदत् पुत्र सिद्धार्थो गच्छ राम यथासुखम् ॥४०॥
अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् । पश्यामि त्वां सुखं वत्स
सुस्थितं राजवर्त्मसु ॥ ४१ ॥ प्रनष्टदुःखसङ्कल्पा हर्षविद्योति-
तानना । द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥ ४२ ॥
भद्रं भद्रासनगतं वनवासादिहागतम् । द्रक्ष्यामि त्वां पुनः
पुत्र तीर्णवन्तं पितुर्वचः ॥ ४३ ॥ मङ्गलैरुपसम्पन्नो वनवासादि-
हागतः । वध्वाश्च मम नित्यं त्वं कामान् सम्वर्द्ध याहि
भोः ॥ ४४ ॥ मयार्च्चिता देवगणाः शिवादयो महर्षयो भूत-
गणाः सुरोरगाः । अभिप्रयातस्य वनं चिराय ते हिताय काङ्क्षन्तु

दिशश्च राघव ॥ ४५ ॥ अतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि। प्रदक्षिणं चापि चकार राघवं पुनः पुनश्चापि निरीक्ष्य सस्वजे ॥ ४६ ॥ तथा हि देव्या च कृतं प्रदक्षिणो निष्पीड्य मातुश्चरणौ पुनः पुनः। जगाम सीता-निलयं महायशाः स राघवः प्रज्वलितस्तया श्रिया ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

पञ्चविंशः सर्गः।

---

अभिवाद्य तु कौशल्यां रामः सम्प्रस्थितो वनम्। कृत-स्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥ विराजयन् राजसुतो राजमार्गं नरैर्वृतम्। हृदयान्याममन्थेव जनस्य गुणवत्तया ॥२॥ वैदेही चापि तत् सर्वं न शुश्राव तपस्विनी। तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥ देवकार्यं स्म सा कृत्वा कृतज्ञा हृष्टचेतना। अभिज्ञा राजधर्माणां राज-पुत्री प्रतीक्षती ॥ ४ ॥ प्रविवेशाथ रामस्तु स्ववेश्म सुविभू-षितम्। प्रहृष्टजनसम्पूर्णं ह्रिया किञ्चिदवाङ्मुखः ॥ ५ ॥ अथ सीता समुत्पत्य वेपमाना च तं पतिम्। अपश्यच्छोक-सन्तप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६ ॥ तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम्। तं शोकं राघवः सोढुं ततो विवृततां गतः ॥ ७ ॥ विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम्। आह दुःखाभिसन्तप्ता किमिदानीमिदं प्रभो ॥ ८ ॥ अद्य बार्हस्पतः श्रीमान् युक्तः पुष्येण राघव। प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥ न ते शतशलाकेन जल-फेननिभेन च। आवृतं वदनं वल्गुच्छत्रेणाभिविराजते ॥ १० ॥

व्यजनाभ्याञ्च मुख्याभ्यां शतपत्रनिभेक्षणम् । चन्द्रहंसप्रका-
शाभ्यां वीज्यते न तवाननम् ॥ ११ ॥ वाग्मिनो वन्दिनश्चापि
प्रहृष्टास्त्वां नरर्षभ । स्तुवन्तो नाद्य दृश्यन्ते मङ्गलैः सूतमा-
गधाः ॥ १२ ॥ न ते क्षौद्रञ्च दधि च ब्राह्मणा वेदपारगाः ।
मूर्ध्नि मूर्द्धाभिषिक्तस्य ददति स्म विधानतः ॥ १३ ॥ न त्वां
प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः । अनुव्रजितुमिच्छन्ति
पौरजानपदास्तथा ॥ १४ ॥ चतुर्भिर्वेगसम्पन्नैः हयैः काञ्चन-
भूषणैः । मुख्यैः पुष्यरथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥
न हस्ती चाग्रतः श्रीमान् सर्वलक्षणपूजितः । प्रयाणे लक्ष्यते
वीर कृष्णमेघगिरिप्रभः ॥ १६ ॥ न च काञ्चनचित्रन्ते
पश्यामि प्रियदर्शनम् । भद्रासनं पुरस्कृत्य यान्तं वीर पुरः-
सरम् ॥ १७ ॥ अभिषेको यदा सज्जः किमिदानीमिदं तव ।
अपूर्व्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥ इतीव विल-
पन्तीं तां प्रोवाच रघुनन्दनः । सीते तत्रभवांस्तातः प्रव्राज-
यति मां वनम् ॥ १९ ॥ कुले महति सम्भूते धर्मज्ञे धर्मचा-
रिणि । शृणु जानकि येनेदं क्रमेणाद्यागतं मम ॥ २० ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै । कैकेय्यै मम मात्रे तु
पुरा दत्तौ महावरौ ॥ २१ ॥ तयाद्य मम सज्जेऽस्मिन्नभिषेके
नृपोद्यते । प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया । पित्रा मे भरत-
श्चापि यौवराज्ये नियोजितः ॥ २३ ॥ सोऽहं त्वामागतो द्रष्टुं
प्रस्थितो विजनं वनम् । भरतस्य समीपन्ते नाहं कथ्यः कदा-
चन ॥ २४ ॥ ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ।
तस्मान्न ते गुणाः कथ्या भरतस्याग्रतो मम ॥ २५ ॥ नापि त्वं
तेन भर्त्तव्या विशेषेण कदाचन । अनुकूलतया शक्यं समीपे
तस्य वर्त्तितुम् ॥ २६ ॥ तस्मै दत्तं नृपतिना यौवराज्यं सना-

सेनम् । स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २७ ॥ अहं चापि प्रतिज्ञां तां गुरोः समनुपालयन् । वनमद्यैव यास्यामि स्थिरीभव मनस्विनि ॥ २८ ॥ याते च मयि कल्याणि वनं मुनिनिषेवितम् । व्रतोपवासपर्य्यायैर्वर्त्तितव्यं त्वया नघे ॥ २९ ॥ कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि । वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ३० ॥ माता च मम कौशल्या वृद्धा सन्तापकर्षिता । धर्ममेवाग्रतः कृत्वा त्वत्तः सम्मानमर्हति ॥ ३१ ॥ वन्दितव्यास्त्वया नित्यं याः शेषा मम मातरः । स्नेहप्रणयसम्भोगैः समा हि मम मातरः ॥ ३२ ॥ भ्रातृपुत्त्रसमौ चापि द्रष्टव्यौ च विशेषतः । उभौ भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥ विप्रियञ्च न कर्त्तव्यं भरतस्य कदाचन । स हि राजा च वैदेहि देशस्य च कुलस्य च ॥ ३४ ॥ आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः । राजानः सम्प्रसीदन्ति प्रकुप्यन्ति विपर्य्यये ॥ ३५ ॥ स्पृशन्निव गजो हन्ति जिघ्रन्निव भुजङ्गमः । स्मयन्निव नृपो हन्ति मानयन्निव दुर्जनः ॥ ३६ ॥ औरसानपि पुत्त्रान् हि त्यजन्त्यहितकारिणः । समर्थान् प्रतिगृह्णन्ति नरानपि नराधिपाः ॥ ३७ ॥ सा त्वं वसेह कल्याणि राज्ञः समनुवर्त्तिनी । भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३८ ॥ अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि । यथा व्यलीकं कुरुषे न कस्यचित्तथा त्वया कार्य्यमिदं वचो मम ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
षड्विंशः सर्गः ।

---

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी। प्रणयादेव
संक्रुद्धा भर्त्तारमिदमब्रवीत् ॥ १ ॥ किमिदं भाषसे राम वाक्यं
लघुतया ध्रुवम्। त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ॥ २ ॥
वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप। अनर्हमयशस्यञ्च
न श्रोतव्यं त्वयेरितम् ॥ ३ ॥ आर्य्यपुत्त्र पिता माता भ्राता
पुत्त्रस्तथा स्नुषा। स्वानि पुण्यानि भुञ्जानाः स्वस्वभाग्यमुपा-
सते ॥ ४ ॥ भर्तुर्भाग्यन्तु नार्य्येका प्राप्नोति पुरुषर्षभ। अत-
श्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥ न पिता नात्मजो
नात्मा न माता न सखीजनः। इह प्रेत्य च नारीणां पति-
रेको गतिः सदा ॥ ६ ॥ यदि त्वं प्रस्थितो दुर्गं वनमद्यैव
राघव। अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ७ ॥
ईर्ष्यारोषौ वहिःकृत्य पीतशेषमिवोदकम्। नय मां वीर
विश्रब्धः पापं मयि न विद्यते ॥ ८ ॥ प्रासादाग्रैर्विमानैर्वा
वैहायसगतेन वा। सर्व्वावस्थागता भर्तुः पादच्छाया वि-
शिष्यते ॥ ९ ॥ अनुशिष्टास्मि माता च पिता च विविधा-
श्रमम्। नास्मि सम्प्रति वक्तव्या वर्त्तितव्यं यथा मया ॥ १० ॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम्। नानामृगगणाकीर्णं
शार्दूलगणसेवितम् ॥ ११ ॥ सुखं वने निवत्स्यामि यथैव भवने
पितुः। अचिन्तयन्ती त्रीन् लोकान् चिन्तयन्ती पतिव्रतम् ॥१२॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी। सह रंस्ये त्वया
वीर वनेषु मधुगन्धिषु ॥ १३ ॥ त्वं हि कर्तुम्वने शक्तो राम
संपरिपालनम्। अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥१४॥
साहं त्वया गमिष्यामि वनमद्य न संशयः। नाहं शक्या महा-
भाग निवर्त्तयितुमुद्यता ॥ १५ ॥ फलमूलाशना नित्यं भवि-
ष्यामि न संशयः। न ते दुःखं करिष्यामि निवसन्ती त्वया
सह ॥ १६ ॥ अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि।

द्रक्ष्यामि सरितः शैलान् पल्वलानि सरांसि च। द्रष्टुं सर्वत्र
निर्भीता त्वया नाथेन धीमता॥१७॥ हंसकारण्डवाकीर्णाः
पद्मिनीः साधुपुष्पिताः। इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण
सङ्गता॥१८॥ अभिषेकं करिष्यामि तासु नित्यमनुव्रता।
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी॥१९॥ एवं वर्ष-
सहस्राणि शतं वापि त्वया सह। व्यतिक्रमं न वेत्स्यामि
स्वर्गोऽपि हि न मे मतः॥२०॥ स्वर्गेऽपि च विना वासो भविता
यदि राघव। त्वया राम नरव्याघ्र नाहं तदपि रोचये॥२१॥
अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणैश्च। वने
निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य सम्मता॥२२॥
अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम्। नय-
स्व मां साधु कुरुष्व याचनां नातो मया ते गुरुता भविष्यति॥२३॥
तथा ब्रुवाणामपि धर्मवत्सला न च स्म सीतां नृवरो निनीषति।
उवाच चैनां बहुसन्निवर्त्तने वने निवासस्य च दुःखतां प्रति॥२४॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सप्तविंशः सर्गः।

---

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः। न नेतुं कुरुते
बुद्धिं वने दुःखानि चिन्तयन्॥१॥ सान्त्वयित्वा ततस्तां तु
बाष्पदूषितलोचनाम्। निवर्त्तनार्थं धर्मात्मा वाक्यमेतदुवाच
ह॥२॥ सीते महाकुलीनासि धर्मे च निरता सदा। इहा-
चरस्व धर्मं त्वं मे यथा मनसः सुखम्॥३॥ सीते यथा त्वां
वक्ष्यामि तथा कार्य्यं त्वयाबले। वने दोषा हि बहवो वदत-
स्तान्निबोध मे॥४॥ सीते विमुच्यतामेषा वनवासकृता मतिः।

बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥ हितबुद्ध्या खलु वचो मयैतदभिधीयते। सदासुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥ गिरिनिर्झरसम्भूता गिरिनिर्दरिवासिनाम्। सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥ क्रीड़माणाश्च विस्रब्धा मत्ताः शून्ये तथा मृगाः। दृष्ट्वा समभिवर्त्तन्ते सीते दुःखमतो वनम् ॥८॥ सग्राहाः सरितश्चैव पङ्कवत्यः सुदुस्तराः। मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥९॥ लताकण्टकसङ्कीर्णाः कृकवाकूपनादिताः। निरपाश्च सुदुःखाश्च मार्गा दुःखमतो वनम् ॥ १० ॥ सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले। रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनम् ॥ ११ ॥ अहोरात्रञ्च सन्तोषः कर्त्तव्यो नियतात्मना। फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ १२ ॥ उपवासश्च कर्त्तव्यो यथा प्राणेन मैथिलि। जटाभारश्च कर्त्तव्यो वल्कलाम्बरधारणम् ॥ १३ ॥ देवतानाञ्च पितॄणां कर्त्तव्यं विधिपूर्वकम्। प्राप्तानामतिथीनाञ्च नित्यशः प्रतिपूजनम् ॥ १४ ॥ कार्य्यस्त्रिरभिषेकश्च काले काले च नित्यशः। चरतां नियमेनैव तस्माद्दुःखतरं वनम् ॥१५॥ उपहारश्च कर्त्तव्यः कुसुमैः स्वयमाहृतैः। आर्षेण विधिना वेद्यां सीते दुःखमतो वनम् ॥ १६ ॥ यथालब्धेन कर्त्तव्यः सन्तोषस्तेन मैथिली। यथाहारैर्वनचरैः सीते दुःखमतो वनम् ॥ १७ ॥ अतीववातस्तिमिरं बुभुक्षा चास्ति नित्यशः। भयानि च महान्त्यत्र ततो दुःखतरं वनम् ॥ १८ ॥ सरीसृपाश्च बहवो बहुरूपाश्च भामिनि। चरन्ति पृथिवीं दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥ नदीनिलयनाः सर्पा नदीकुटिलगामिनः। तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनम् ॥ २० ॥ द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि। वने व्याकुलशाखाग्रास्तेन दुःखमतो वनम् ॥ २१ ॥ पतङ्गा वृश्चिकाः कीटाश्च

दंशाश्च मशकैः सह । बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥ २२॥ कायक्लेशाश्च बहवो भयानि विविधानि च । अरण्यवासे वसतो दुःखमेव तदा वनम् ॥ २३ ॥ क्रोधलोभौ विमोक्तव्यौ कर्त्तव्या तपसे मतिः । न भेतव्यञ्च भेतव्ये दुःखं नित्यमतो वनम् ॥ २४ ॥ तदलन्ते वनं गत्वा क्षमं न हि वनं तव । विमृशन्निह पश्यामि बहुदोषकरं वनम् ॥ २५ ॥ वनन्तु नेतुं न कृता मतिस्तदा बभूव रामेण यदा महात्मना । न तस्य सीता वचनं चकार तत्ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

अष्टाविंशः सर्गः ।

---

एतत् तु वचनं श्रुत्वा सीता रामस्य दुःखिता । प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥ ये त्वया कीर्त्तिता दोषा वने वस्तव्यतां प्रति । गुणानित्येव तान् विद्धि तव स्नेहपुरस्कृतान् ॥ २ ॥ मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा । चमराः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥ अदृष्टपूर्वरूपत्वात् सर्वे ते तव राघव । रूपं दृष्ट्वापसर्पेयुस्तव सर्वे हि बिभ्यति ॥ ४ ॥ त्वया च सह गन्तव्यं मया गुरुजनाज्ञया । त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितम् ॥ ५ ॥ न हि मां त्वत्समीपस्थामपि शक्तोऽपि राघव । सुराणामीश्वरः शक्रः प्रधर्षयितुमोजसा ॥ ६ ॥ पतिहीना तु या नारी सा न शक्ष्यति जीवितुम् । काममेवंविधं राम त्वया मम विह-

र्थितम् ॥ ७ ॥ अथापि च महाप्राज्ञ ब्राह्मणानां मया श्रुतम् ।
पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥ ८ ॥ लाक्षणिभ्यो
द्विजातिभ्यः श्रुत्वाहं वचनं गृहे । वनवासकृतोत्साहा नित्य-
मेव महाबल ॥ ९ ॥ आदेशो वनवासस्य प्राप्तव्यः स मया किल ।
सा त्वया सह तत्राहं यास्यामि प्रिय नान्यथा ॥ १० ॥ कृता-
देशा भविष्यामि गमिष्यामि सह त्वया । कालश्चायं समुत्पन्नः
सत्यवाक् भवतु द्विजः ॥ ११ ॥ वनवासे हि जानामि दुःखानि
बहुधा किल । प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२ ॥
कन्यया च पितुर्गेहे वनवासः श्रुतो मया । भिक्षिण्याः साधु-
वृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥ प्रसादितश्च वै पूर्वं त्वया
बहुविधं प्रभो । गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥१४॥
कृतक्षणाहं भद्रं ते गमनं प्रति राघव । वनवासस्य शूरस्य
मम चर्य्या हि रोचते ॥ १५ ॥ शुद्धात्मन् प्रेमभावाद्धि भवि-
ष्यामि विकल्मषा । भर्त्तारमनुगच्छन्ती भर्त्ता हि मम दैव-
तम् ॥ १६ ॥ प्रेत्यभावेपि कल्याणः सङ्गमो मे सह त्वया ।
श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ॥ १७ ॥ इह-
लोके च पितृभिर्या स्त्री यस्य महामते । अद्भिर्दत्ता स्वधर्मेण
प्रेत्यभावेपि तस्य सा ॥ १८ ॥ एवमस्मात् स्वकां नारीं सुवृत्तां
हि पतिव्रताम् । नाभिरोचयसे नेतुं त्वं मां केनैव हेतुना ॥१९॥
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः । नेतुमर्हसि
काकुत्स्थ समानसुखदुःखिनीम् ॥ २० ॥ यदि मां दुःखिता-
मेवं वनं नेतुं न चेच्छसि । विषमाग्निं जलं वाहमास्थास्ये
मृत्युकारणात् ॥ २१ ॥ एवं बहुविधं तं स याचते गमनं
प्रति । नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२ ॥
एवमुक्ता तु सा चिन्तां मैथिली समुपागता । स्नापयन्तीव
गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २३ ॥ चिन्तयन्तीं तदा तां तु

निवर्त्तयितुमात्मवान्। क्रोधाविष्टान्तु वैदेहीं काकुत्स्थो बह्व सान्त्वयत्॥ २४॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकोनत्रिंशः सर्गः।

---

सान्त्वमाना तु रामेण मैथिली जनकात्मजा। वनवासनिमित्ताय भर्त्तारमिदमब्रवीत्॥ १॥ सा तमुत्तमसंविग्ना सीता विपुलवक्षसम्। प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम्॥२॥ किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः। राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम्॥ ३॥ अनृतं बत लोकोयमज्ञानाद्यदि वक्ष्यति। तेजो नास्ति परं रामे तपतीव दिवाकरे॥ ४॥ किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते। यत् परित्यक्तुकामस्त्वं मामनन्यपरायणाम्॥ ५॥ द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रताम्। सावित्रीमिव मां विद्धि त्वमात्मवशवर्त्तिनीम्॥ ६॥ न त्वहं मनसाप्यन्यं द्रष्टास्मि त्वदृतेनघ। त्वया राघव गच्छेयं यथान्या कुलपांसनी॥ ७॥ स्वयं तु भार्य्यां कौमारीं चिरमध्युषितां सतीम्। शैलूष इव मां राम परेभ्यो दातुमिच्छसि॥ ८॥ यस्य पथ्यञ्च रामात्थ यस्य चार्थेवरुध्यसे। त्वं तस्य भव वश्यश्च विधेयश्च सदानघ॥ ९॥ स मामनादाय वनं न त्वं प्रस्थातुमर्हसि। तपो वा यदि वारण्यं स्वर्गो वा स्यात् त्वया सह॥ १०॥ नच मे भविता तत्र कश्चित् पथि परिश्रमः। पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव॥ ११॥ कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः। तूलाजिनसमस्पर्शा मार्गे मम त्वया सह॥ १२॥ महावातसमुद्धूतं यन्मामव-

करिष्यति । रक्षो रमण तन्मन्ये परार्द्धमिव चन्दनम् ॥ १३ ॥
शाद्वलेषु यदा शिश्ये वनान्तरनगोचरा । कुथास्तरणतल्पेषु
किं स्यात् सुखतरं ततः ॥ १४ ॥ पत्रं मूलं फलं यत्तु अल्पं वा
यदि वा बहु । दास्यसे स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥१५॥
न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः । आर्त्तवाण्युपभु-
ञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥ न च तत्र ततः
किञ्चित् द्रष्टुमर्हसि विप्रियम् । मत्कृतेन च ते शोको न
भविष्यामि दुर्भरा ॥ १७ । यस्त्वया सह सः स्वर्गो निरयो
यस्त्वया विना । इति जानन् परां प्रीतिं गच्छ राम मया सह ॥१८॥
अथ मामेवमव्यग्रां वनं नैव नयिष्यसे । विषमद्यैव पास्यामि
माविशं द्विषतां वशम् ॥ १९ ॥ पश्चादपि हि दुःखेन मम
नैवास्ति जीवितम् । उज्झितायास्त्वया नाथ तदैव मरणं
वरम् ॥ २० ॥ इमं हि सहितुं शोकं मुहूर्त्तमपि नोत्सहे ।
किं पुनर्दशवर्षाणि त्रीणि चैकञ्च दुःखिता ॥ १२ ॥ इति सा
शोकसन्तप्ता विलप्य करुणं बहु । चुक्रोश पतिमायस्ता भृश-
मालिङ्ग्य सस्वरम् ॥ २२ ॥ सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजा-
ङ्गना । चिरसन्नियतं वाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥
तस्याः स्फटिकसङ्काशं वारि सन्तापसम्भवम् । नेत्राभ्यां परि-
सुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥ तत् सितामलचन्द्राभं
मुखमायतलोचनम् । पर्य्यशुष्यत वाष्पेण जलोद्धृतमिवा-
म्बुजम् ॥ २५ ॥ तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् ।
उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥ न देवि तव
दुःखेन स्वर्गमप्यभिरोचये । न हि मेऽस्ति भयं किञ्चित् स्वयम्भो-
रिव सर्व्वतः ॥ २७ ॥ तव सर्वमभिप्रायमविज्ञाय शुभानने ।
वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ ८ ॥ यत् सृष्टासि
मया सार्द्धं वनवासाय मैथिलि । न विहातुं मया शक्या

प्रीतिरात्मवता यथा ॥ २९ ॥ धर्मस्तु गजनासोरु सद्भिराच-
रितः पुरा। तं चाहमनुवर्त्तिष्ये यथा सूर्य्यं सुवर्च्चला ॥ ३० ॥
न खल्वहं न गच्छेयं वनं जनकनन्दिनि। वचनन्तन्नयति
मां पितुः सत्योपबृंहितम् ॥ ३१ ॥ एष धर्मश्च सुश्रोणि पितु-
र्मातुश्च वश्यता। आज्ञामहं व्यतिक्रम्य नाहं जीवितुमुत्-
सहे ॥ ३२ ॥ अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते। स्वाधीनं
समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥ यत्र त्रयं त्रयो लोकाः
पवित्रं तत्समं भुवि। नान्यदस्ति शुभापाङ्गे तेनेदमभिरा-
ध्यते ॥ ३४ ॥ न सत्यं दानमानौ वा यज्ञा वाप्याप्तदक्षिणाः।
तथा बलकराः सीते यथा सेवा पितुर्मता ॥ ३५ ॥ स्वर्गो धनं
वा धान्यं वा विद्या पुत्त्राः सुखानि च। गुरुवृत्त्यनुरोधेन न
किञ्चिदपि दुर्लभम् ॥ ३६ ॥ देवगन्धर्वगोलोकान् ब्रह्मलोकां-
स्तथापरान्। प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥३७॥
स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः। तथा वर्त्तितु-
मिच्छामि स हि धर्मः सनातनः ॥ ३८ ॥ मम सन्ना मतिः
सीते नेतुं त्वां दण्डकावनम्। वसिष्यामीति सा त्वं मामनु-
यातुं सुनिश्चिताम् ॥ ३९ ॥ सा हि दिष्टानवद्याङ्गि वनाय
मदिरेक्षणे। अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४० ॥
सर्वथा सदृशं सीते मम स्वस्य कुलस्य च। व्यवसायमनुक्रान्ता
कान्ते त्वमतिशोभनम् ॥ ४१ ॥ आरभस्व गुरुश्रोणि वन-
वासक्षमा क्रियाः। नेदानीं त्वदृते सीते स्वर्गोऽपि मम रो-
चते ॥ ४२ ॥ ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम्।
देहि चाशंसमानेभ्यः सत्वरस्व च माचिरम् ॥ ४३ ॥ भूषणानि
महार्हाणि वरवस्त्राणि यानि च। रमणीयाश्च ये केचित्
क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥ शयनीयानि यानानि मम
चान्यानि तानि च। देहि स्वभृत्यवर्गस्य ब्राह्मणानामन-

न्तरम् ॥ ४५ ॥ अनुकूलन्तु सा भर्तुर्ज्ञात्वा गमनमात्मनः। क्षिप्रं प्रमुदिता देवी दातुमेवोपचक्रमे ॥ ४६ ॥ ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम्। धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥४७॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

त्रिंशः सर्गः।

---

एवं श्रुत्वा तु सम्वादं लक्ष्मणः पूर्वमागतः। वाष्पपर्य्याकुलमुखः शोकं सोढुमशक्नुवान् ॥ १ ॥ स भ्रातुश्चरणं गाढं निपीड्य रघुनन्दनः। सीतामुवाचातियशां राघवञ्च महाव्रतम् ॥ २ ॥ यदि गन्तुं कृता बुद्धिर्वनं मृगगणैर्युतम्। अहं त्वानुगमिष्यामि वनमग्रे धनुर्द्धरः ॥ ३ ॥ मया समेतोरण्यानि रम्याणि विचरिष्यसि। पक्षिभिर्मृगयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥ न देवलोकाक्रमणं नामरत्वमहं वृणे। ऐश्वर्य्यं चापि लोकानां कामये न त्वया विना ॥ ५ ॥ एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः। रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥ अनुज्ञातोस्मि भवता पूर्वमेव यदाप्यहम्। किमिदानीं पुनरपि क्रियते मे निवारणम् ॥७॥ यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः। एतदिच्छामि विज्ञातुं संशयो हि ममानघ ॥ ८ ॥ ततोब्रवीन्महातेजा रामो लक्ष्मणमग्रतः। स्थितं प्राग्गामिनं वीरं याचमानं कृताञ्जलिम् ॥ ९ ॥ स्निग्धो धर्मरतो वीरः सततं सत्पथे स्थितः। प्रियः प्राणसमो वश्यो भ्राता चापि सखा च मे ॥ १० ॥ मयाद्य सह सौमित्रे त्वयि गच्छति तद्वनम्। को भरिष्यति कौशल्यां सुमित्रां वा यश-

स्विनीम् ॥ ११ ॥ अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव। स कामवशपर्य्यस्तो महातेजा महीपतिः ॥ १२ ॥ सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता। दुःखितानां सपत्नीनां न करिष्यति शोभनम्। १३ ॥ न स्मरिष्यति कौशल्यां सुमित्रां वा सुदुःखिताम्। भरतो राज्यमासाद्य कैकेय्यां पर्य्यवस्थितः ॥१४॥ तामार्य्यां स्वयमेवेह राजानुग्रहणेन वा। सौमित्रे भर कौशल्यामुक्तमर्थमिमञ्चर ॥ १५ ॥ एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता। धर्मज्ञ गुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥ एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन। अस्माभिर्विप्रहीनाया मातुर्नो न भवेत् सुखम् ॥ १७ ॥ एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा। प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८ ॥ तवैव तेजसा वीर भरतः पूजयिष्यति। कौशल्याञ्च सुमित्राञ्च प्रयतो नात्र संशयः ॥ १९ ॥ यदि दुष्टो न रक्षेत भरतो राज्यमुत्तमम्। प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः ॥ २० ॥ तदाहं दुर्मतिं क्रूरं वधिष्यामि न संशयः। तत्पक्षानपि तान् सर्व्वान् त्रैलोक्यमपि किन्तु सा ॥ २१ ॥ कौशल्या बिभृयादार्य्य सहस्रं मद्विधानपि। यस्याः सहस्रं ग्रामाणां सम्प्राप्तमुपजीविनाम् ॥ २२ ॥ तदात्मभरणे चैव मम मातुस्तथैव च। पर्य्याप्ता मद्विधानाञ्च भरणाय मनस्विनी ॥२३॥ कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते। कृतार्थोऽहं भविष्यामि तव चार्थः प्रकल्पते ॥ २४ ॥ धनुरादाय सगुणं खनित्रपिटकाधरः। अग्रतस्ते गमिष्यामि पन्थानमनुदर्शयन् ॥ २५ ॥ आहरिष्यामि ते नित्यं मूलानि च फलानि च। वन्यानि यानि चान्यानि स्वाहार्हाणि तपस्विनाम् ॥ २६ ॥ भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्व्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥२७॥ रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम्।

व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥ २८ ॥ ये च राज्ञे ददौ दिव्ये महात्मा वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९ ॥ अभेद्यकवचे दिव्ये तूणी चाक्षय्यसायकौ । आदित्यविमलौ चोभौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥ सत्कृत्य निहितं सर्वमेतदाचार्य्यसद्मनि । सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ ३१ ॥ स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः । इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३२ ॥ तद्दिव्यं राजशार्दूलः सत्कृतं माल्यभूषितम् । रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥ ३३ ॥ तमुवाचात्मवान् रामः प्रीत्या लक्ष्मणमागतम् । काले त्वमागतः सौम्य काङ्क्षिते मम लक्ष्मण ॥ ३४ ॥ अहं प्रदातुमिच्छामि यदिदं मामकं धनम् । ब्राह्मणेभ्यः तपस्विभ्यस्त्वया सह परन्तप ॥ ३५ ॥ वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः । तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ॥ ३६ ॥ वशिष्ठपुत्त्रन्तु सुयज्ञमार्य्यं त्वमानयाशु प्रवरं द्विजानाम् । अभिप्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान् द्विजातीन् ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकत्रिंशः सर्गः ।

---

ततः शासनमाज्ञाय भ्रातुः प्रियकरं हितम् । गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥ तं विप्रमग्न्यागारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् । सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २ ॥ ततः सन्ध्यामुपास्याय गत्वा सौमित्रिणा सह । जुष्टन्तत् प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३ ॥ समागतं

वेदविदं प्राञ्जलिः सीतया सह । सुयज्ञमभिचक्राम राघवोऽग्नि-
मिवार्च्चितम् ॥ ४ ॥ जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः ।
स हेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥ अन्यैश्च रत्नै-
र्बहुभिः काकुत्स्थः प्रत्यपूजयत् । सुयज्ञं स तदोवाच रामः
सीताप्रचोदितः ॥ ६ ॥ हारञ्च हेमसूत्रञ्च भार्य्यायै सौम्य
हारय । रशनां चाथ सा सीता दातुमिच्छति ते सखी ॥ ७ ॥
अङ्गदानि च चित्राणि केयूराणि शुभानि च । प्रयच्छति सखे
तुभ्यं भार्य्यायै गच्छती वनम् ॥ ८ ॥ पर्य्यङ्कमग्र्यास्तरणं
नानारत्नविभूषितम् । तमपीच्छति वैदेही प्रतिष्ठापयितुं
त्वयि ॥ ६ ॥ नागः शत्रुञ्जयो नाम मातुलोयं ददौ मम ।
तन्ते निष्कसहस्रेण ददामि द्विजपुङ्गव ॥ १० ॥ इत्युक्तः स
तु रामेण सुयज्ञः प्रतिगृह्य तत् । रामलक्ष्मणसीतानां
प्रयुयोजाशिषः शिवाः ॥ ११ ॥ अथ भ्रातरमव्यग्रं प्रियं रामः
प्रियम्वदम् । सौमित्रिन्तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२ ॥
आगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ । अर्च्चयाह्वय
सौमित्रे रत्नैः सस्यमिवाम्बुभिः ॥ १३ ॥ तर्पयस्व महाबाहो
गोसहस्रेण राघव । सुवर्णरजतैश्चैव मणिभिश्च महाधनैः ॥१४॥
कौशल्यां चैव आशीर्भिभक्तः पर्य्युपतिष्ठति । आचार्य्यस्तैत्ति-
रीयाणामभिरूपश्च वेदवित् ॥ १५ ॥ तस्य यानञ्च दासीश्च
सौमित्रे सम्प्रदापय । कौशेयानि च वस्त्राणि यावत्तुष्यति
स द्विजः ॥ १६ ॥ सूतश्चित्ररथाचार्य्यः सचिवः सुचिरोषितः ।
तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥ १७ ॥ पशुकाभिश्च
सर्व्वाभिर्गवां दशशतेन च । ये चेमे कठकालापा बहवो दण्ड-
माणवाः ॥१८॥ नित्यस्वाध्यायशीलत्वान्नान्यत् कुर्व्वन्ति किञ्च
न । अलसाः स्वादुकामाश्च महतां चापि सम्मताः ॥ १६ ॥
तेषामशीति यानानि रत्नपूर्णानि दापय । शालिवाह-

सहस्रञ्च भद्रकान् सम्प्रदापय। व्यञ्जनार्थञ्च सौमित्रे गोसहस्रमुपाकुरु ॥ २० ॥ मेखलीनां महासङ्घः कौशल्यां समुपस्थितः। तेषां सहस्रं सौमित्रे प्रत्येकं सम्प्रदापय ॥ २१ ॥ अम्बा यथा नो नन्देच्च कौशल्या मम दक्षिणाम्। तथा द्विजातींस्तान् सर्व्वान् लक्ष्मणार्च्चय सर्वशः ॥ २२ ॥ ततः पुरुषशार्दूलस्तद्धनं लक्ष्मणः स्वयम्। यथोक्तं ब्राह्मणेन्द्राणामददद्धनदो यथा ॥ २३ ॥ अथाब्रवीद्बाष्पगलांस्तिष्ठतश्चोपजीविनः। सम्प्रदाय बहुद्रव्यमेकैकस्योपजीवनम् ॥ २४ ॥ लक्ष्मणस्य च यद्वेश्म गृहञ्च यदिदं मम। अशून्यं कार्य्यमेकैकं यावदागमनं मम ॥ २५ ॥ इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम्। उवाचेदं धनाध्यक्षं धनमानीयतामिति ॥ २६ ॥ ततोऽस्य धनमाजह्रुः सर्वएवोपजीविनः। स राशिः सुमहांस्तत्र दर्शनीयोह्य दृश्यत ॥ २७ ॥ ततः स पुरुषव्याघ्रस्तद्धनं सह-लक्ष्मणः। द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् ॥ २८ ॥ तत्रासीत् पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः। क्षतवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥ २९ ॥ तं वृद्धं तरुणी भार्य्या बालानादाय दारकान्। अब्रवीद्ब्राह्मणं वाक्यं दारिद्र्येण प्रपीड़िता ॥ ३० ॥ अपास्य फालं कुद्दालं कुरुष्व वचनं मम। रामं दर्शय धर्मज्ञं यदि किञ्चिदवाप्स्यसे ॥ ३१ ॥ भार्य्याया वचनं श्रुत्वा शाटीमाच्छाद्य दुश्छदाम्। स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ॥ ३२ ॥ भृग्वङ्गिरःसमं दीप्त्या त्रिजटं जनसंसदि। आपञ्चमायाः कक्ष्याया नैनं कश्चिदवारयत् ॥ ३३ ॥ स राजपुत्रमासाद्य त्रिजटो वाक्यमब्रवीत्। निर्द्धनो बहुपुत्रोऽस्मि राजपुत्र महायशः ॥ ३४ ॥ क्षतवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति। तमुवाच ततो रामः परिहाससमन्वितम् ॥ ३५ ॥ गवां सहस्रमप्येकं न तु विश्राणितं

मया। परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसे ॥ ३६ ॥ स
शाटीं त्वरितः कथ्यां सम्भ्रान्तः परिवेष्ट्य ताम्। आविध्य दण्डं
चिक्षेप सर्वप्राणेन वेगतः ॥ ३७ ॥ स तीर्त्वा सरयूपारं दण्ड-
स्तस्य करात् च्युतः। गोव्रजबहुसाहस्रे पपातोक्ष्णां च
सन्निधौ ॥ ३८ ॥ तं परिष्वज्य धर्मात्मा आतस्मात् सरयूतटात्।
आनयामास ता गावस्त्रिजटस्याश्रमं प्रति ॥ ३९ ॥ उवाच च
तदा रामस्तं गार्ग्यमभिसान्त्वयन् मन्युर्न खलु कर्त्तव्यः परि-
हासो ह्ययं मम ॥ ४० ॥ इदं हि तेजस्तव यद्दुरत्ययं तदेव
जिज्ञासितुमिच्छता मया। इमं भवानर्थमभिप्रचोदितो वृणीष्व
किञ्चेदपरं व्यवस्यसि ॥ ४१ ॥ ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा
धनं हि यद्यन्मम विप्रकारणात्। भवत्सु सम्यक्प्रतिपाद-
नेन मयार्जितं प्रीतियशस्करं भवेत् ॥ ४२ ॥ ततः सभार्य्य-
स्त्रिजटो महामुनिर्गवामनीकं प्रतिगृह्य मोदितः। यशोबल-
प्रीतिसुखोपबृंहणीस्तथाशिषः प्रत्यवदन्महात्मनः ॥ ४३ ॥
स चापि रामः परिपूर्णपौरुषो महाधनं धर्मबलैरुपार्ज्जितम्।
नियोजयामास सुहृज्जने चिराद्यथार्हसम्मानवचःप्रचो-
दितः ॥ ४४ ॥ द्विजः सुहृद्भृत्यजनोऽथवा तदा दरिद्रभिक्षा-
चरणश्च यो भवेत्। न तत्र कश्चिन्न बभूव तर्पितो यथार्ह-
सम्माननदानसम्भ्रमैः ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकोनत्रिंशः सर्गः।

---

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु। जग्मतुः पितरं
द्रष्टुं सीतया सह राघवौ ॥ १ ॥ ततो गृहीते प्रेष्याभ्यामशो-
भेतां तदायुधे। मालादामभिरासक्ते सीतया समलंकृते ॥ २ ॥

ततः प्रासादहर्म्याणि विमानशिखराणि च। अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत्॥ ३॥ न हि रथ्याः सुशक्यन्ते गन्तुं बहुजनाकुलाः। आरुह्य तस्मात् प्रासादाद्दीनाः पश्यन्ति राघवम्॥ ४॥ पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः। ऊचुर्बहुविधा वाचः शोकोपहतचेतसः॥ ५॥ यं यान्तमनुयाति स्म चतुरङ्गबलं महत्। तमेकं सीतया सार्द्धमनुयाति स्म लक्ष्मणः॥ ६॥ ऐश्वर्य्यस्य रसज्ञः सन् कामानां चैव कामदः। नेच्छत्येवानृतं कर्तुं वचनं धर्मगौरवात्॥ ७॥ या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि। तामद्य सीतां पश्यन्ति राजमार्गगता जनाः॥ ८॥ अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम्। वर्षमुष्णञ्च शीतञ्च नेष्यत्याशु विवर्णताम्॥ ९॥ अद्य नूनं दशरथः सत्त्वमाविश्य भाषते। न हि राजा प्रियं पुत्त्रं विवासयितुमर्हति॥ १०॥ निर्गुणस्यापि पुत्रस्य कथं स्याद्विप्रवासनम्। किं पुनर्यस्य लोकोयं जितो वृत्तेन केवलम्॥ ११॥ आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः। राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम्॥१२॥ तस्मात् तस्योपघातेन प्रजाः परमपीड़िताः। औदकानिव सत्त्वानि ग्रीष्मे सलिलसङ्क्षयात्॥ १३॥ पीड़या पीड़ितं सर्वं जगदस्य जगत्पतेः। मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः॥१४॥ मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः। पुष्पं फलञ्च पत्रञ्च शाखाश्चास्येतरे जनाः॥ १५॥ ते लक्ष्मण इव क्षिप्रं सपत्न्यः सहबान्धवाः। गच्छन्तमनुगच्छामो येन गच्छति राघवः॥ १६॥ उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च। एकदुःखसुखा राममनुगच्छाम राघवम्॥ १७॥ समुद्धृतनिधानानि परिध्वस्ताजिराणि च। उपात्तधनधान्यानि हृतसाराणि सर्वशः॥ १८॥ रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः।

मूषकैः परिधावद्भिरुद्विलैरावृतानि च ॥ १९ ॥ अपेतोदक-
धूमानि हीनसंमार्जनानि च। प्रणष्टबलिकर्मेज्यामन्त्रहोम-
जपानि च ॥ २० ॥ दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च।
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ २१ ॥ वनं नगर-
मेवास्तु येन गच्छति राघवः। अस्माभिश्च परित्यक्तं पुरं सम्प-
द्यतां वनम् ॥ २२ ॥ विलानि दंष्ट्रिणः सर्वे सानूनि मृग-
पक्षिणः। त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥ २३ ॥
अस्मत्त्यक्तं प्रपद्यन्तु सेव्यमानं त्यजन्तु च। तृणमांसफला-
दानं देशं व्यालमृगद्विजम् ॥ २४ ॥ प्रपद्यतां हि कैकेयी
सपुत्रा सह बान्धवैः। राघवेण वयं सर्वे वने वत्स्यामो नि-
र्वृताः ॥ २५ ॥ इत्येवं विविधा वाचो नानाजनसमीरिताः।
शुश्राव राघवः श्रुत्वा न विचक्रेऽस्य मानसम् ॥ २६ ॥ स तु वेश्म
पितुर्दूरात् कैलासशिखरप्रभम्। अभिचक्राम धर्मात्मा मत्त-
मातङ्गविक्रमः ॥ २७ ॥ विनीतवीरपुरुषं प्रविश्य तु नृपालयम्।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८ ॥ प्रतीक्षमा-
णोऽभिजनन्तदार्त्तमनार्त्तरूपः प्रहसन्निवाथ। जगाम रामः
पितरं दिदृक्षुः पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २९ ॥ तत्पूर्व-
मैक्ष्वाकसुतो महात्मा रामो गमिष्यन् नृपमार्त्तरूपम्। व्यति-
ष्ठत प्रेक्ष्य तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् ॥ ३० ॥
पितुर्निदेशेन तु धर्मवत्सलो वनप्रवेशे कृतबुद्धिनिश्चयः। स
राघवः प्रेक्ष्य सुमन्त्रमब्रवीन्निवेदयस्वागमनं नृपाय मे ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
त्रयस्त्रिंशः सर्गः।

---

ततः कमलपत्राक्षः श्यामो निरुदरो महान् । उवाच
रामस्तं सूतं पितुराख्याहि मामिति ॥ १ ॥ स रामप्रेषितः
क्षिप्रं सन्तापकलुषेन्द्रियम् । प्रविश्य नृपतिं सूतो निश्वसन्तं
ददर्श ह ॥ २ ॥ उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् ।
तड़ागमिव निस्तोयं सोपश्यज्जगतीपतिम् ॥ ३ ॥ आलोक्य तं
महाप्राज्ञः परमाकुलचेतसम् । राममेवानुशोचन्तं सूतः प्राञ्ज-
लिरादरात् ॥ ४ ॥ तं वर्द्धयित्वा राजानं पूर्वं सूतो जयाशिषा ।
भयविक्लवया वाचा मन्दया श्लक्ष्णमब्रवीत् ॥ ५ ॥ अयं स
पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः । ब्राह्मणेभ्यो धनं दत्वा
सर्वं चैवोपजीविनाम् ॥ ६ ॥ स त्वां पश्यतु भद्रन्ते रामः सत्य-
पराक्रमः । सर्व्वान् सुहृद आपृच्छ्य त्वां हीदानीं दिदृक्षते ॥७॥
गमिष्यति महारण्य तं पश्य जगतीपते । वृतं राजगुणैः सर्वै-
रादित्यमिव रश्मिभिः ॥ ८ ॥ स सत्यवादी धर्मात्मा गाम्भी-
र्य्यात् सागरोपमः । आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच
तम् ॥ ९ ॥ सुमन्त्रानय मे दारान् ये केचिदिह मामकाः ।
दारैः परिवृतः सर्व्वैर्द्रष्टुमिच्छामि राघवम् ॥ १० ॥ सोन्तःपुर-
मतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् । आर्य्यो ह्वयति वो राजा
गम्यतां तत्र माचिरम् ॥ ११ ॥ एवमुक्ताः स्त्रियः सर्व्वाः सुम-
न्त्रेण नृपाज्ञया । प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥१२॥
अर्द्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः । कौशल्यां परिवा-
र्य्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३ ॥ आगतेषु च दारेषु समवेक्ष्य
महीपतिः । उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥१४॥
स सूतो राममादाय लक्ष्मणं मैथिलीं तथा । जगामाभिमुख-
स्तूर्णं सकाशं जगतीपतेः ॥ १५ ॥ स राजा पुत्त्रमायान्तं दृष्ट्वा
दूरात् कृताञ्जलिम् । उत्पपातासनात्तूर्णं आर्त्तः स्त्रीजन-
संवृतः ॥ १६ ॥ सोभिदुद्राव वेगेन रामं दृष्ट्वा विशाम्पतिः । तमस

प्राप्य दुःखार्त्तः पपात भुवि मूर्च्छितः॥ १७॥ तं रामोऽभ्य-
पतत् क्षिप्रं लक्ष्मणश्च महारथः। विसंज्ञमिव दुःखेन सशोकं
नृपतिं तदा॥ १८॥ स्त्रीसहस्रनिनादश्च संजज्ञे राज-
वेश्मनि। हाहा रामेति सहसा भूषणध्वनिमूर्च्छितः॥ १९॥
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ। पर्य्यङ्के सीतया
सार्द्धं रुदन्तः समवेशयन्॥ २०॥ अथ रामो मुहूर्त्तान्तं लब्ध-
संज्ञं महीपतिम्। उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम्॥२१॥
आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः। प्रस्थितं दण्ड-
कारण्यं पश्य त्वं कुशलेन माम्॥ २२॥ लक्ष्मणञ्चानुजानीहि
सीता चान्वेतु मां वनम्। कारणैर्बहुभिस्तथ्यैर्वार्य्यमाणौ न
चेच्छतः॥ २३॥ अनुजानीहि सर्व्वान्नः शोकमुत्सृज्य मानद।
लक्ष्मणं मां च सीताञ्च प्रजापतिरिव प्रजाः॥ २४॥ प्रतीक्ष-
माणमव्यग्रमनुज्ञां जगतीपतेः। उवाच राजा सम्प्रेक्ष्य वनवा-
साय राघवम्॥ २५। अहं राघव कैकेय्या वरदानेन मोहितः।
अयोध्यायां त्वमेवाद्य भव राजा निगृह्य माम्॥ २६। एव-
मुक्तो नृपतिना रामो धर्मभृतां वरः। प्रत्युवाचाञ्जलिं कृत्वा
पितरं वाक्यकोविदः॥ २७॥ भवान् वर्षसहस्रायुः पृथिव्या
नृपते पतिः। अहं त्वरण्ये वत्स्यामि न मे कार्य्यं त्वयानृतः॥२८॥
नवपञ्च च वर्षाणि वनवासे विहृत्य ते। पुनः पादौ ग्रहीष्यामि
प्रतिज्ञान्ते नराधिप॥ २९॥ रुदन्नार्त्तः प्रियं पुत्त्रं सत्यपाशेन
संयुतः। कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत्॥ ३०॥
श्रेयसे वृद्धये तात पुनरागमनाय च। गच्छ स्वारिष्टमव्यग्रः
पन्थानमकुतोभयम्॥ ३१। न हि सत्यात्मनस्तात धर्माभि-
मनसस्तव। विनिवर्त्तयितुं बुद्धिः शक्यते रघुनन्दन॥ ३२॥
अद्य त्विदानीं रजनीं पुत्त्र मा गच्छ सर्वथा। एकाहं दर्शनेः
नापि साधु तावच्चराम्यहम्॥३३॥ मातरं मां च सम्पश्यन् वसे-

मामद्य शर्वरीम् । तर्पितः सर्वकामैस्त्वं श्वः काल्ये साधयि-
ष्यसि ॥ २४ ॥ दुष्करं क्रियते पुत्र सर्वथा राघव त्वया । मत्-
प्रियार्थं प्रियांस्त्यक्त्वा यद्यासि विजनं वनम् ॥ २५ ॥ न चैतन्-
मे प्रियं पुत्र शपे सत्येन राघव । छन्नया चलितस्त्वस्मि स्त्रिया
भस्माग्निकल्पया ॥ २६ ॥ वञ्चना या तु लब्धा मे तां त्वं निस्त-
र्तुमिच्छसि । अनया वृत्तसादिन्या कैकेय्याभिप्रचोदितः ॥२७॥
न चैतदाश्चर्यतमं यत् त्वं ज्येष्ठः सुतो मम । अपानृतकथं पुत्र
पितरं कर्तुमिच्छसि ॥ २८ ॥ अथ रामस्तदा श्रुत्वा पितु-
रार्त्तस्य भाषितम् । लक्ष्मणेन सह भ्राता दीनो वचनमब्र-
वीत् ॥२९॥ प्राप्स्यामि यानद्य गुणान् को मे श्वस्तान् प्रदास्यति ।
अपक्रमणमेवातः सर्वकामैरहं वृणे ॥ ४० ॥ इयं सराष्ट्रा सजना
धनधान्यसमाकुला । मया विसृष्टा वसुधा भरताय प्रदीय-
ताम् ॥ ४१ ॥ वनवासकृता बुद्धिर्न च मेद्य चलिष्यति । य-
स्तुष्टेन वरो दत्तः कैकेय्यै वरद त्वया ॥ ४२ ॥ दीयतां नि-
खिलेनैव सत्यस्त्वम्भव पार्थिव । अहं निदेशं भवतो यथोक्तमनु-
पालयन् ॥ ४३ ॥ चतुर्दश समा वत्स्ये वने वनचरैः सह । मा
विमर्शो वसुमती भरताय प्रदीयताम् ॥ ४४ ॥ न हि मे
काङ्क्षितं राज्यं सुखमात्मनि वा प्रियम् । यथा निदेशं कर्तुं
वै तव वै रघुनन्दन ॥ ४५ ॥ अपगच्छतु ते दुःखं माभूर्वाष्प-
परिप्लुतः । न हि क्षुभ्यति दुर्द्धर्षः समुद्रः सरिताम्पतिः ॥ ४६ ॥
नैवाहं राज्यमिच्छामि न सुखं नच मैथिलीम् । नैव सर्वानि-
मान् कामान् न स्वर्गं नच जीवितम् ॥ ४७ ॥ त्वामहं सत्य-
मिच्छामि नानृतं पुरुषर्षभ । प्रत्यक्षं तव सत्येन सुकृतेन च ते
शपे ॥ ४८ ॥ न च शक्यं मया तात स्थातुं क्षणमपि प्रभो ।
स शोकं धारयस्वेमं न हि मेस्ति विपर्य्ययः ॥ ४९ ॥ अर्थितो
ह्यस्मि कैकेय्या वनं गच्छेति राघव । मया चोक्तं व्रजामीति

मत् सत्यमनुपालये ॥ ५० ॥ मा चोत्कण्ठां कृथा देव वने
रंस्यामहे वयम्। प्रशान्ते हरिणाकीर्णे नानाशकुनिना-
दिते ॥ ५१ ॥ पिता हि दैवतं तात देवतानामपि स्मृतम्।
तस्माद्दैवतमित्येव करिष्यामि पितुर्वचः ॥ ५२ ॥ चतुर्दशसु
वर्षेषु गतेषु नरसत्तम। पुनर्द्रक्ष्यसि मां प्राप्तं सन्तापोयं विमु-
च्यताम् ॥ ५३ । येन संस्तम्भनीयोयं सर्व्वो वाष्पाकुलो जनः।
स त्वं पुरुषशार्दूल किमर्थं विक्रियाङ्गतः ॥ ५४ ॥ पुरञ्च राष्ट्रञ्च
मही च केवला मया विसृष्टा भरताय दीयताम्। अहं नि-
देशं भवतोनुपालयन् वनं गमिष्यामि चिराय सेवितुम् ॥ ५५ ॥
न मे विसृष्टां भरतो महीमिमां सशैलखण्डां सपुरां सकान-
नाम्। शिवां सुसीमामनुशास्तु केवलं त्वया यदुक्तं नृपते तथास्तु
तत् ॥ ५६ ॥ मया तथा पार्थिव दीयते मनो महत्सु कामेषु
न चात्मनः प्रिये। यथा निदेशे तव शिष्टसम्मते व्यपैतु दुःखं
तव मत्कृतेनघ ॥ ५७ ॥ तदद्य नैवाद्य न राज्यमव्ययं न सर्व-
कामान् वसुधां न मैथिलीम्। न जीवितं त्वामनृतेन योजयन्
वृणीय सत्यं व्रतमस्तु ते तथा ॥ ५८ ॥ फलानि मूलानि च
भक्षयन् वने गिरींश्च पश्यन् सरितं सरांसि च। वनं प्रविश्यैव
विचित्रपादपम् सुखी भविष्यामि तवास्तु निर्वृतिः ॥ ५९ ॥
एवं स राजा व्यसनाभिपन्नस्तापेन दुःखेन च पीड्यमानः।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो भूमिङ्गतो नैव विचेष्ट किञ्चित् ॥६०॥
देव्यः समस्ता रुरुदुः समेतास्तां वर्जयित्वा नरदेवपत्नीम्।
रुदन् सुमन्त्रोपि जगाम मूर्च्छां हाहाकृतं तत्र बभूव सर्वम् ॥६१॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
चतुस्त्रिंशः सर्गः।

ततो निर्धूय सहसा शिरो निश्वस्य चासकृत । पाणिं पाणौ विनिष्पिष्य दन्तान् कटकटाय्य च ॥ १ ॥ लोचने कोपसंरक्ते वर्णं पूर्व्वोचितं जहत् । कोपाभिभूतः सहसा सन्तापमशुभङ्गतः ॥ २ ॥ मनः समीक्षमाणश्च सूतो दशरथस्य सः । कम्पयन्निव कैकेय्या हृदयं वाक्शरैः शतैः ॥ ३ ॥ वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव चाशुगैः । कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥ यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम् । भर्त्ता सर्वस्य जगतः स्थावरस्य चरस्य च ॥ ५ ॥ न ह्यकार्य्यतमं किञ्चित्तव देवीह विद्यते । पतिघ्नीन्त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥ ६ ॥ यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलम् । महोदधिमिवाक्षोभ्यं सन्तापयसि कर्मभिः ॥ ७ ॥ मावमंस्था दशरथं भर्त्तारं वरदं पतिम् । भर्त्तुरिच्छा हि नारीणां पुत्त्रकोट्या विशिष्यते ॥ ८ ॥ यथावयो हि राज्यानि प्राप्नुवन्ति नृपक्षये । इक्ष्वाकुकुलनाथेऽस्मिंस्तल्लोपयितुमिच्छसि ॥ ९ ॥ राजा भवतु ते पुत्त्रो भरतः शास्तु मेदिनीम् । वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १० ॥ न हि ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति । तादृशन्त्वममर्य्यादमद्य कर्म करिष्यसि ॥ ११ ॥ आश्चर्य्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम् । आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १२ ॥ महाब्रह्मर्षिसृष्टा वा ज्वलन्तो भीमदर्शनाः । धिक् वाग्दण्डा विहिंसन्ति रामप्रव्राजने स्थिताम् ॥ १३ ॥ आम्रञ्छित्वा कुठारेण निम्बं परिचरेत्तु कः । य एनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १४ ॥ अभिजात्यं हि ते मन्ये यथा मातुस्तथैव ते । न हि निम्बात् स्रवेत् क्षौद्रं लोके निगदितं वचः ॥ १५ ॥ तव मातुरसद्ग्राहं विद्मः पूर्वं यथा श्रुतम् । पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमम् ॥ १६ ॥ सर्वभूतरुतं तस्मात् सञ्जज्ञे वसुधाधिपः । तेन

तिर्य्यग्गतानाञ्च भूतानां विदितं वचः॥ १७॥ ततो जृम्भस्य
शयने विरुतादूभूरिवर्च्चसः। पितुस्ते विदितो भावः स तत्र
बहुधा हसत्॥ १८॥ तत्र तं जननी क्रुद्धा मृत्युपाशमभीप्सती।
हासन्ते नृपते सौम्य जिज्ञासामीति चाब्रवीत्॥ १९॥ नृप-
स्तोवाच तां देवीं विशंसामि ते यदि। ततो मे मरणं सद्यो
भविष्यति न संशयः॥ २०॥ माता ते पितरं देवी ततः कैकय-
मब्रवीत्। शंस मे जीव वा मा वा न मामपहसिष्यसि॥ २१॥
प्रियया च तथोक्तः स कैकयः पृथिवीपतिः। तस्मै तं वरदा-
यार्थं कथयामास तत्त्वतः॥ २२॥ ततः स वरदः साधू राजानं
प्रत्यभाषत। म्रियतां ध्वंसतां चेयं माकृथास्त्वं महीपते॥ २३॥
स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः। मातरं ते निरस्याशु
विजहार कुवेरवत्॥ २४॥ तथा त्वमपि राजानं दुर्ज्जना-
चरिते पथि। असद्ग्राहमिमं मोहात् कुरुषे पापदर्शिनी॥२५॥
सत्यश्चात्र प्रवादोयं लौकिकः प्रतिभाति मे। पितॄन् समनुजा-
यन्ते नरा मातरमङ्गनाः॥ २६॥ नैया भव गृहाणेदं यदाह
वसुधाधिपः। भर्त्तुरिच्छामुपास्येह जनस्यास्य गतिर्भव॥२७॥
मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभम्। भर्त्तारं लोक-
भर्त्तारमसद्धर्ममुपादधः। २८॥ न हि मिथ्याप्रतिज्ञातं करि-
ष्यति तवानघः। श्रीमान् दशरथो राजा देवि राजीवलो-
चनः॥ २९॥ ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मस्यापि रक्षिता।
रक्षिता जीवलोकस्य देवि रामोभिषिच्यताम्॥ ३०॥ परिवादो
हि ते देवि महान् लोके चरिष्यति। यदि रामो वनं याति
विहाय पितरं नृपम्॥ ३१॥ स्वराज्यं राघवः पातु भव त्वं
विगतज्वरा। न हि ते राघवादन्यः क्षेमः पुरवरे वसन्॥३२॥
रामे हि यौवराज्यस्थे राजा दशरथो वनम्। प्रवेक्ष्यति महे-
ष्वासः पूर्ववृत्तमनुस्मरन्॥ ३३॥ इति सान्त्वैश्च तीक्ष्णैश्च कैकेयीं

राजसंसदि । भूयः सङ्क्षोभयामास सुमन्त्रस्तु कृताञ्जलिः ॥ ३४ ॥
नैव सा क्षुभ्यते देवी न वास्म परिदूयते । न चास्या मुखवर्णस्य
लक्ष्यते विक्रिया तदा ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

पञ्चत्रिंशः सर्गः ।

---

ततः सुमन्त्रमैक्ष्वाकुः पीड़ितोऽत्र प्रतिज्ञया । सवाष्पमति-
निश्वस्य जगादेदं पुनर्वचः ॥ १ ॥ सूत रत्नसुसम्पूर्णा चतु-
र्विधबला चमूः । राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीय-
ताम् ॥ २ ॥ रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः ।
शोभयन्तु कुमारस्य वाहिनीः सुप्रसारिताः ॥ ३ ॥ ये चैनमुप-
जीवन्ति रमते यैश्च वीर्य्यतः । तेषां बहुधनं दत्वा तानप्यत्र
नियोजय ॥ ४ ॥ आयुधानि च मुख्यानि नागराः शकटानि
च । अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्यकोविदाः ॥ ५ ॥ निघ्नं-
मृगान् कुञ्जरांश्च पिबंश्चारण्यकं मधु । नदीश्च विविधाः पश्यन्
न राज्यं संस्मरिष्यति ॥ ६ ॥ धान्यकोशश्च यः कश्चिद्धनकोशश्च
मामकः । तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७ ॥
यजन् पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः । ऋषिभिश्चाभिसङ्गम्य
प्रवत्स्यति सुखं वने ॥ ८ ॥ भरतश्च महाबाहुरयोध्यां पाल-
यिष्यति । सर्वकामैः पुनः श्रीमान् रामः संसाध्यतामिति ॥ ९ ॥
इति ब्रुवति काकुत्स्थे कैकेयी भयमागता । मुखञ्चास्यागम-
च्छोषं स्वरश्चापि व्यरुध्यत ॥ १० ॥ सा विषण्णा च सन्त्रस्ता
मुखेन परिशुष्यता । राजानमेवाभिमुखी कैकेयी वाक्य-
मब्रवीत् ॥ ११ ॥ राज्यं गतधनं साधो पीतमण्डां सुरामिव ।

निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२ ॥ कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम् । राजा दशरथो वाक्यमुवाचायतलोचनाम् ॥ १३ । वहन्तं किन्नुदसि मां नियुज्य धुरि माहिते । अनार्ये कृत्यमारब्धं किन्न पूर्वमुपारुधः ॥ १४ ॥ तस्यैतत् क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना । कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५ ॥ तवैव वंशे सगरो ज्येष्ठं पुत्त्रमुपारुधत् । असमञ्ज इति ख्यातं तथायं गन्तुमर्हति ॥ १६ ॥ एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् । व्रीड़ितश्च जनः सर्वः सा च तन्नावबुध्यत ॥ १७ ॥ तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः । शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥ असमञ्जो गृहीत्वा तु क्रीड़तः पथि दारकान् । सरय्वां प्रक्षिपन्नाशु रमते तेन दुर्मतिः ॥ १९ ॥ तं दृष्ट्वा नागराः सर्वे क्रुद्धा राजानमब्रुवन् । असमञ्जं वृणीष्वैकमस्माकं राष्ट्रवर्द्धनः ॥ २० ॥ तानुवाच ततो राजा किंनिमित्तमिदं भयम् । ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥ २१ ॥ क्रीड़तस्त्वेष नः पुत्त्रान् बालानुद्भ्रान्तचेतसः । सरय्वां प्रक्षिपन्मौर्ख्यादतुलां प्रीतिमश्नुते ॥ २२ ॥ स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः । तं तत्याजाहितं पुत्त्रं तासां प्रियचिकीर्षया ॥ २३ ॥ तं यानं शीघ्रमारोप्य सभार्य्यं सपरिच्छदम् । यावज्जीवं विवास्योऽयमिति स्वानन्वशात् पिता । सफालपिटकं गृह्य गिरिदुर्गाण्यलोकयत् । दिशः सर्व्वास्त्वनुचरन् स यथा पापकर्मकृत् ॥ २५ ॥ इत्येनमत्यजद्राजा सगरो वै सुधार्मिकः । रामः किमकरोत् पापं येनैवमपरुध्यते ॥ २६ ॥ न हि किञ्चन पश्यामो राघवस्यागुणं वयम् । दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषम् ॥ २७ ॥ अथवा देवि दोषं त्वं कञ्चित् पश्यसि राघवे । तमद्य ब्रूहि तत्त्वेन तदा रामो विवास्यते ॥ २८ ॥

अदुष्टस्य हि सन्त्यागः सत्पथे निरतस्य च । निर्दहेदपि शक्रस्य
द्युतिं धर्मविरोधनात् ॥ २८ ॥ तदलं देवि रामस्य श्रिया
विहतया त्वया। लोकतोऽपि हि ते रक्ष्यः परिवादः शुभानने ॥३०॥
श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरस्वरः । शोकोपहतया
वाचा कैकेयीमिदमब्रवीत् ॥ ३१ ॥ एतद्वचो नेच्छति पापरूपे
हितं न जानासि ममात्मनो वा । आस्थाय मार्गं कृपणं कुचेष्टा
चेष्टा हि ते साधुपथादपेता ॥ ३२ ॥ अनुव्रजिष्याम्यहमद्य रामं
राज्यं परित्यज्य सुखं धनञ्च । सहैव राज्ञा भरतेन च त्वं यथा-
सुखं भुङ्क्ष्व चिराय राज्यम् ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

षट्त्रिंशः सर्गः ।

---

महामात्रवचः श्रुत्वा रामो दशरथं तदा । अभ्यभाषत
वाक्यन्तु विनयज्ञो विनीतवत् ॥ १ ॥ त्यक्तभोगस्य मे राजन्
वने वन्येन जीवतः । किं कार्य्यमनुयात्रेण त्यक्तसङ्गस्य
सर्वतः ॥ २ ॥ यो हि दत्वा द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः ।
रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३ ॥ तथा मम
सतांश्रेष्ठ किं ध्वजिन्या जगत्पते । सर्व्वाण्येवानुजानामि
चीराण्येवानयन्तु मे ॥ ४ ॥ खनित्रपिटके चोभे समानयत
गच्छत । चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५ ॥ अथ
चीराणि कैकेयी स्वयमादाय राघवम् । उवाच परिधत्स्वेति
जनौघे निरपत्रपा ॥ ६ ॥ स चीरे पुरुषव्याघ्रः कैकेय्याः प्रति-
गृह्य ते । सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ॥ ७ ॥
लक्ष्मणश्चापि तं चैव विहाय वसने शुभे । तापसाच्छादने चैव

प्रमृह्य च सुदुर्मनाः॥ ८॥ अथात्मपरिधानार्थं सीता कौशेय-
वासिनी। समीक्ष्य चीरं सन्त्रस्ता पृषती वागुरामिव॥ ९॥
सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः। कैकेय्याः कुशचीरे ते
जानकी शुभलक्षणा॥ १०॥ अश्रुसम्पूर्णनेत्रा च धर्मज्ञा धर्म-
दर्शिनी। गन्धर्वराजप्रतिमं भर्त्तारमिदमब्रवीत्॥ ११॥ कथं
नु चीरं बध्नन्ति मुनयो वनवासिनः। इति ह्यकुशला सीता
सा मुमोह मुहुर्मुहुः॥ १२॥ कृत्वा कण्ठे तु सा चीरमेक-
मादाय पाणिना। तस्थौ ह्यकुशला तत्र ब्रीड़िता जनकात्मजा॥१३॥
तस्याः तत् क्षिप्रमागम्य रामो धर्मभृताम्बरः। चीरं बबन्ध
सीतायाः कौशेयस्योपरि स्वयम्॥ १४॥ रामं प्रेक्ष्य तु सी-
तायाः बध्नन्तं चीरमुत्तमम्। अन्तःपुरचरा नार्यो मुमुचुर्वारि
नेत्रजम्॥ १५॥ ऊचुश्च परमायत्ता रामं ज्वलिततेजसम्।
वत्स मैवं नियुक्तेयं वनवासे मनस्विनी॥ १६॥ पितुर्वाक्यानु-
रोधेन गतस्य विजनं वनम्। तावद्दर्शनमस्या नः सफलं भवतु
प्रभो॥ १७॥ लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक। नेय-
मर्हति कल्याणी वस्तुं तापसवन्वने॥ १८॥ कुरु नो याचनां
राम सीता तिष्ठतु भामिनी। धर्मनित्यः स्वयं स्थातुं न ही-
दानीं त्वमिच्छसि॥ १९॥ तासामेवंविधा वाचः शृण्वन्दश-
रथात्मजः। बबन्धैव तदा चीरं सीतया तुल्यशीलया॥ २०॥
चीरे गृहीते तु तया समीक्ष्य नृपतेर्गुरुः। निवार्य सीतां
कैकेयीं वशिष्ठो वाक्यमब्रवीत्॥ २१॥ अतिप्रवृत्ते दुर्मेधे
कैकेयि कुलपांसनि। वञ्चयित्वा तु राजानं नप्रमाणेव
तिष्ठति॥ २२॥ न गन्तव्यं वनं देव्या सीतया शीलवर्जिते।
अनुष्ठास्यति रामस्य सीता प्रकृतमासनम्॥ २३॥ आत्मा हि
दाराः सर्वेषां दारसंग्रहवर्त्तिनाम्। आत्मेयमिति रामस्य पाल-
यिष्यति मेदिनीम्॥ २४॥ अथ यास्यति वैदेही वनं रामेण

सङ्गता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥ अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥ ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः । तद्वन भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति । त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यति । पितृवंशचरित्रज्ञः सोन्यथा न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् । लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणाणि देवि देहि स्नुषायै व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः कैकयराजपुत्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्रदाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तत्रिंशः सर्गः ।

---

तस्यां चीरं वसानायां नाथवत्यामनाथवत्। प्रचुक्रोश जनः सर्वो धिक् त्वां दशरथं त्विति॥ १॥ तेन तत्र प्रणादेन दुःखितः स महीपतिः। चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः॥ २॥ स निश्वस्योष्णमैक्ष्वाकुस्तां भार्यामिदमब्रवीत्। कैकेयि कुशचीरेण न सीता गन्तुमर्हति॥ ३॥ सुकुमारी च बाला च सततञ्च सुखोचिता। नेयं वनस्य योग्येति सत्यमाह गुरुर्मम॥ ४॥ इयं हि कस्यापि करोति किञ्चित्तपस्विनी राजवरस्य पुत्री। या चीरमासाद्य जनस्य मध्ये स्थिता विसंज्ञा श्रमणीव काचित्॥ ५॥ चीराण्यपास्याज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्वा। यथासुखं गच्छतु राजपुत्री वनं समग्रा सह सर्वरत्नैः॥ ६॥ अजीवनार्हेण मया नृशंसा कृता प्रतिज्ञा नियमेन तावत्। त्वया हि बाल्यात् प्रतिपन्नमेतत् तन्मां दहेद्वेणुमिवात्मपुष्पम्॥ ७॥ रामेण यदि ते पापे किञ्चित् कृतमशोभनम्। अपकारः क इह ते वैदेह्या दर्शितोऽधमे॥ ८॥ मृगीवोत्फुल्लनयना मृदुशीला मनस्विनी। अपकारं किमिव ते करोति जनकात्मजा॥ ९॥ ननु पर्य्याप्तमेतत्ते पापे रामविवासनम्। किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः॥ १०॥ प्रतिज्ञातं मया तावत् त्वयोक्तं देवि शृण्वता। रामं यदभिषेकाय त्वमिहागतमब्रवीः॥ ११॥ तत्त्वेतत्समतिक्रम्य निरयं गन्तुमिच्छसि। मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम्॥ १२॥ इतीव राजा विलपन्महात्मा शोकस्य नान्तं स ददर्श किञ्चित्। भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसनेन मग्नः॥ १३॥ एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम्। अवाक्शिरसमासीनमिदं वचनमब्रवीत्॥ १४॥ इयं धार्मिक कौशल्या मम माता यशस्विनी। वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते॥ १५॥

सङ्गता। वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥
अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः। सहोपजीव्यं
राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा
वनेचरः। वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह। त्वमेका शाधि
दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र
रामो न भूपतिः। तद्वनं भविता राष्ट्रं यत्र रामो निवत्-
स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं
क्षितितलाद्गगनं चोत्पतिष्यति। पितृवंशचरित्रज्ञः सोऽन्यथा
न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम्।
लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव
कैकेयि पशुव्यालमृगद्विजान्। गच्छतः सह रामेण पादपांश्च
तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै
व्यपनीय चीरम्। न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्व-
सनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः
कैकयराजपुत्रि। विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह
राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु
राजपुत्री। वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्र-
दाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्र-
तिमप्रभावे। नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रति-
कारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सप्तत्रिंशः सर्गः।

यत्साधुर्वीरो निर्वास्यते वनम् ॥ ११ ॥ राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः । योजयित्वा ययौ तत्र रथमश्वैरलङ्कृतम् ॥ १२ ॥ तं रथं राजपुत्राय सूतः कनकभूषितम् । आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३ ॥ राजा सत्वरमाहूय व्यापृतं वित्तसञ्चये । उवाच देशकालज्ञो निश्चितं सर्वतः शुचिः ॥ १४ ॥ वासांसि च वरार्हाणि भूषणानि महान्ति च । वर्षाण्येतानि संख्याय वैदेह्याः चिप्रमानय ॥ १५ ॥ नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः । प्रायच्छत्सर्वमाहृत्य सीतायै सममेव तत् ॥ १६ ॥ सा सुजाता सुजातानि वैदेही प्रस्थिता वनम् । भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥ व्यराजयत वैदेही वेश्म तत्सुविभूषिता । उद्यतोंऽशुमतः काले खं प्रभेव विवस्वतः ॥ १८ ॥ तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् । अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९ ॥ असत्यः सर्वलोकेऽस्मिन् सततं सत्कृताः प्रियैः । भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ २० ॥ एष स्वभावो नारीणामनुभूय पुरा सुखम् । अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१ ॥ असत्यशीला विकृता दुर्गाह्यहृदयाः सदा । युवत्यः पापसंकल्पाः चणमात्राद्विकारिणः ॥ २ ॥ न कुलं न कृतं विद्या न दत्तं नापि संग्रहः । स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥ २३ ॥ साध्वीनां तु स्थितानान्तु शीले सत्ये श्रुते स्थिते । स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ २४ ॥ स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो वनम् । तव देववदस्त्वेष निर्धनः सधनोऽपि वा ॥ ५ ॥ विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम् । कृतांजलिरुवाचेदं श्वश्रूमभिमुखे स्थिताम् ॥ २६ ॥ करिष्ये सर्वमेवाहं आर्या यदनुशास्ति मां । अभिज्ञास्मि यथा भर्तु-

सङ्गता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥
अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं
राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥ २६ ॥ भरतश्च सशत्रुघ्नश्चीरवासा
वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि
दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र
रामो न भूपतिः । तद्वनं भविता राष्ट्रं यत्र रामो निवत्-
स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति ।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं
क्षितितलाद्गगनं चोत्पतिष्यसि । पितृवंशचरित्रज्ञः सोऽन्यथा
न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् ।
लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव
कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च
तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै
व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्व-
सनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः
केकयराजपुत्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह
राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु
राजपुत्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्र-
दाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्र-
तिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रति-
कारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः ।

---

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः। उपसंगृह्य
राजानं चक्रुर्दीनाः प्रदक्षिणम्॥ १ ॥ तं चापि समनुज्ञाप्य
धर्मज्ञः सह सीतया। राघवः शोकसंमूढो जननीमभ्यवा-
दयत्॥ २ ॥ अन्वक्षं लक्ष्मणो भ्रातुः कौशल्यामभ्यवादयत्।
अपि मातुः सुमित्राया जग्राह चरणौ पुनः॥ ३ ॥ तं वन्दमानं
रुदती माता सौमित्रिमब्रवीत्। हितकामा महाबाहुं मूर्ध्न्युप-
घ्राय लक्ष्मणम्॥ ४ ॥ सृष्टस्त्वं वनवासाय स्वनुरक्तः
सुहृज्जने। रामे प्रमादं माकार्षीः पुत्र भ्रातरि गच्छति॥ ५ ॥
व्यसनी वा समृद्धो वा गतिरेष तवानघ। एष लोके सतां
धर्मो यज्ज्येष्ठवशगो भवेत्॥ ६ ॥ इदं हि वृत्तमुचितं कुलस्यास्य
सनातनम्। दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु हि॥ ७ ॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्। अयोध्यामटवीं
विद्धि गच्छ तात यथासुखम्॥ ८ ॥ लक्ष्मणं त्वेवमुक्त्वासौ
संसिद्धं प्रियराघवम्। सुमित्रा गच्छ गच्छेति पुनः पुनरु-
वाच तम्॥ ९ ॥ गम्यतामर्थलाभाय क्षेमाय विजयाय च।
शत्रुपक्षविनाशाय पुनः संदर्शनाय च। ततः सुमन्त्रः काकुत्स्थं
प्राञ्जलिर्वाक्यमब्रवीत्। विनीतो विनयज्ञश्च मातलिर्वासवं
यथा॥ १०॥ रथमारोह भद्रं ते राजपुत्र महायशः। क्षिप्रं
त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसे॥ ११ ॥ चतुर्दश हि
वर्षाणि वस्तव्यानि वने त्वया। तान्युपक्रमितव्यानि यानि
देव्यासि चोदितः॥ १२ ॥ तं रथं सूर्यसंकाशं सीता हृष्टेन
चेतसा। आरुरोह वरारोहा कृत्वालङ्कारमात्मनः॥ १३ ॥
अथो ज्वलनसङ्काशं चामीकरविभूषितम्। तावारुरुहतुस्तूर्णं
भ्रातरौ रामलक्ष्मणौ॥ १४ ॥ वनवासं हि संख्याय वासांस्या-
भरणानि च। भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो
ददौ॥ १५ ॥ तथैवायुधजालानि भ्रातृभ्यां कवचानि च।

सङ्गता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥
अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं
राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा
वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि
दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र
रामो न भूपतिः । तद्वन भविता राष्ट्रं यत्र रामो निवत्-
स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति ।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं
क्षितितलाद्गगनं चोत्पतिष्यति । पितृवंशचरित्रज्ञः सोऽन्यथा
न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् ।
लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव
कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च
तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै
व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्व-
सनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः
केकयराजपुत्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह
राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु
राजपुत्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्र-
दाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्र-
तिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रति-
कारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः ।

दित: ॥ ३२ ॥ निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः । पतितैरभ्यवहितं प्रशशाम महीरज: ॥ ३३ ॥ रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् । प्रयाणे राघवस्यासीत्पुरं परमपीडितम् ॥ ३४ ॥ सुस्राव नयनैः स्त्रीणामस्रमायाससम्भवम् । मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव ॥ ३५ ॥ दृष्ट्वा तु नृपति: श्रीमानेकचित्तगतं पुरम् । निपपातेव दुःखेन कृत्तमूल इव द्रुमः ॥ ३६ ॥ ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठत: । नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥३७॥ हा रामेति जनाः केचिद्राम रामेति चापरे । अन्तःपुरसमृद्धं च क्रोशन्तं पर्यदेवयन् ॥ ३८ ॥ अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् । राजानं मातरं चैव ददर्शानुगतो पथि ॥ ३९ ॥ विबद्ध इव पाशेन किशोरो मातरं यथा । धर्मपाशेन संक्षिप्त: प्रकाशं नाभ्युदैक्षत ॥ ४० ॥ पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ । दृष्ट्वा संचोदयामास शीघ्रं याहीति सारथिम् ॥४१॥ नहि तत् पुरुषव्याघ्रो दुःखजं दर्शनं पितु: । मातुश्च सहितुं शक्तस्तोत्रार्दित इव द्विप: ॥ ४२ ॥ प्रत्यगारमिवायान्ती वत्सला वत्सकारणात् । बद्धवत्सा यथा धेनू राममाताभ्यधावत ॥ ४३ ॥ तथा रुदन्तीं कौशल्यां रथन्तमनुधावतीम् । क्रोशन्तीं राम रामेति हा सीते लक्ष्मणेति च ॥ ४४ ॥ रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम् । असकृत्प्रैक्षत तदा नृत्यन्तीमिव मातरम् ॥ ४५ ॥ तिष्ठेति राजा चुक्रोश याहि याहीति राघव: । सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥ ४६ ॥ नाश्रौषमिति चात्मानमुपलब्धोपि वक्ष्यसि । चिरं दुःखस्य पापिष्ठमिति रामस्तमब्रवीत् ॥ ४७ ॥ रामस्य च वच: कुर्वन्ननुज्ञाप्य च तं जनम् । व्रजतोपि हयान् शीघ्रं चोदयामास सारथि: ॥ ४८ ॥ न्यवर्तत जनो राज्ञो रामं

सङ्गता। वयमत्रानुयास्यामः पुरं चेदं गमिष्यति॥ २५ ॥
अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः। सहोपजीव्यं
राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा
वनेचरः। वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह। त्वमेका शाधि
दुर्वृत्ता प्रजानामहिते रता ॥ २८॥ न हि तद्भविता राष्ट्रं यत्र
रामो न भूपतिः। तद्वनं भविता राष्ट्रं यत्र रामो निवत्-
स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३०॥ यद्यपि त्वं
क्षितितलाद्गगनं चोत्पतिष्यति। पितृवंशचरित्रज्ञः सोन्यथा
न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम्।
लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव
कैकेयि पशुव्यालमृगद्विजान्। गच्छतः सह रामेण पादपांश्च
तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै
व्यपनीय चीरम्। न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्व-
सनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः
कैकयराजपुत्रि। विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह
राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु
राजपुत्री। वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्र-
दाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्र-
तिमप्रभावे। नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रति-
कारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः।

हारगणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः ॥ ११ ॥ नक्ष-
त्राणि गतार्चींषि ग्रहाश्च गततेजसः। विशाखाश्च सधूमाश्च
नभसि प्रचकाशिरे ॥ १२ ॥ कालिकानिलवेगेन महोदधिरि-
वोत्थितः। रामे वनं प्रव्रजिते नगरं प्रचचाल तत् ॥ १३ ॥
दिशः पर्य्याकुलाः सर्व्वास्तिमिरेणेव संवृताः। न ग्रहो नापि
नक्षत्रं प्रचकाशे न किञ्च न ॥ १४ ॥ अकस्मान्नागरः सर्व्वो जनो
दैन्यमुपागमत्। आहारे वा विहारे वा न कश्चिदकरोन्मनः ॥१५॥
शोकपर्य्यायसन्तप्तः सततं दीर्घमुच्छ्वसन्। अयोध्यायां जनः
सर्वश्चुक्रोश जगतीपतिम् ॥ १६ ॥ वाष्पपर्य्याकुलमुखो राज-
मार्गगतो जनः। न हृष्टो लक्ष्यते कश्चित् सर्वः शोकपरा-
यणः ॥ १७ ॥ न वान्ति पवनाः शीता न शशी सौम्यदर्शनः।
न सूर्य्यस्तपते लोकं सर्वं पर्य्याकुलं जगत् ॥ १८ ॥ अनर्थिनः
सुताः स्त्रीणां भर्त्तारो भ्रातरस्तथा। सर्वे सर्वं परित्यज्य राम-
मेवान्वचिन्तयन् ॥ १९ ॥ ये तु रामस्य सुहृदः सर्वे ते मूढ-
चेतसः। शोकभारेण चाक्रान्ताः शयनं नैव भेजिरे ॥ २० ॥
ततस्त्वयोध्या रहिता महात्मना पुरन्दरेणेव मही सपर्वता।
चचाल घोरं भयशोकदीपिता सनागयोधाश्वगणा ननाद
च ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

एकचत्वारिंशः सर्गः।

---

सङ्गता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥
अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं
राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा
वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि
दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र
रामो न भूपतिः । तद्वनं भविता राष्ट्रं यत्र रामो निवत्-
स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति ।
त्वयि वा पुत्त्रवद्वस्तु यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं
क्षितितलाद्गगनं चोत्पतिष्यति । पितृवंशचरित्रज्ञः सोन्यथा
न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्त्रगर्द्धिन्या पुत्त्रस्य कृतमप्रियम् ।
लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव
कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च
तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै
व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्व-
सनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः
केकयराजपुत्त्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह
राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु
राजपुत्त्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्र-
दाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्र-
तिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रति-
कारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः ।

---

करेणूनामिवर्षभः ॥ १७ ॥ द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं
वनेचराः । राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥
सा नूनं जनकस्येष्टा सुता सुखसदोचिता । कण्टकाक्रमणा-
क्रान्ता वनमद्य गमिष्यति ॥ १९ ॥ अनभिज्ञा वनानां सा नूनं
भयमुपैष्यति । श्वापदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणम् ॥२०॥
सकामा भव कैकेयि विधवा राज्यमावस । न हि तं पुरुषव्याघ्रं
विना जीवितुमुत्सहे ॥ २१ ॥ इत्येवं विलपन् राजा जनौघै-
रभिसंवृतः । अपस्नात इवारिष्टं प्रविवेश पुरोत्तमम् ॥ २२ ॥
शून्यचत्वरवेश्मान्तां संवृतापणवेदिकाम् । क्लान्तदुर्बलदुःखार्तां
नात्याकीर्णमहापथाम् ॥ २३ ॥ तामवेक्ष्य पुरीं सर्व्वां राममेवानु-
चिन्तयन् । विलपन् प्रविशद्राजा गृहं सूर्य्य इवाम्बुधम् ॥ २४ ॥
महाह्रदमिव क्षोभ्यं सुपर्णेन हृतोरगम् । रामेण रहितं वेश्म
वैदेह्या लक्ष्मणेन च ॥ २५ ॥ अथ गद्गदशब्दस्तु विलपन् वसु-
धाधिपः । उवाच मृदुमन्दार्थं वचनं दीनमस्वरम् ॥ २६ ॥
कौशल्याया गृहं शीघ्रं राममातुर्नयन्तु माम् । न ह्यन्यत्र ममा-
श्वासो हृदयस्य भविष्यति ॥ २७ ॥ इति ब्रुवन्तं राजानमान-
यन् द्वारदर्शिनः । कौशल्याया गृहं तत्र न्यवेश्यत विनीत-
वत् ॥ २८ ॥ ततस्तत्र प्रविष्टस्य कौशल्याया निवेशनम् ।
अधिरुह्यापि शयनं बभूव लुलितं मनः ॥ २९ ॥ पुत्रद्वयविही-
नञ्च स्नुषया च विवर्जितम् । अपश्यद्भवनं राजा नष्टचन्द्रमिवा-
म्बरम् ॥ ३० ॥ तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्य्यवान् ।
उच्चैःस्वरेण प्राक्रोशद्धा राम विजहासि माम् ॥ ३१ ॥ सुखिता
बत तं कालं जीविष्यन्ति नरोत्तमाः । परिष्वजन्तो ये रामं
द्रक्ष्यन्ति पुनरागतम् । ३२ ॥ अथ रात्र्यां प्रपन्नायां काल-
रात्र्यामिवात्मनः । अर्द्धरात्रे दशरथः कौशल्यामिदमब्रवीत् ॥३३॥
न त्वां पश्यामि कौशल्ये साधु मां पाणिना स्पृश । रामं मेऽनु-

सङ्गता। वयमत्रानुयास्यामः पुरं चेदं गमिष्यति॥ २५॥ अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः। सहोपजीव्यं राष्ट्रञ्च पुरञ्च सपरिच्छदम्॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः। वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम्॥२७॥ ततः शून्यां गतजनां वसुधां पादपैः सह। त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता॥ २८॥ न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः। तद्वन भविता राष्ट्रं यत्र रामो निवत्स्यति॥ २९॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति। त्वयि वा पुत्रवद्वस्तु यदि जातो महीपतेः॥ ३०॥ यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यति। पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति॥ ३१॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम्। लोके न हि स विद्येत यो न राममनुव्रतः॥ ३२॥ द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान्। गच्छतः सह रामेण पादपांश्च तदुन्मुखान्॥ ३३॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम्। न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः॥ ३४॥ एकस्य रामस्य वने निवासस्त्वया वृतः केकयराजपुत्रि। विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण॥ ३५॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री। वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्रदाने॥ ३६॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे। नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा॥ ३७॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे सप्तत्रिंशः सर्गः।

वीरः प्रवेक्ष्यति। पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥ १२ ॥
कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ। लाजैरवकरि-
ष्यन्ति प्रविशन्तावरिन्दमौ ॥ १३ ॥ प्रविशन्तौ कदायोध्यां
द्रक्ष्यामि शुभकुण्डलैः। उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव प-
र्वतौ ॥ १४ ॥ कदा सुमनसः कन्या द्विजातीनां फलानि च।
प्रदिशन्तः पुरीं हृष्टाः करिष्यन्ति प्रदक्षिणाम् ॥ १५ ॥ कदा
परिणतो बुद्ध्या वयसा चामरप्रभः। अभ्युपैष्यति धर्मात्मा
त्रिवर्ष इव मां ललन् ॥ १६ ॥ निःसंशयं मया मन्ये पुरा वीर-
कदर्थ्यया। पातुकामेषु वत्सेषु मातॄणां शातितास्तनाः ॥ १७ ॥
साहं गौरिव सिंहेन विवत्सा वत्सला कृता। कैकेय्या पुरुषव्याघ्र
बालवत्सेव गौर्बलात् ॥ १८ ॥ न हि तावत् गुणैर्जुष्टं सर्व-
शास्त्रविशारदम्। एकपुत्त्रा विना पुत्त्रमहं जीवितुमुत्सहे ॥१९॥
न हि मे जीविते किञ्चित् सामर्थ्यमिह कल्प्यते। अपश्यन्त्याः
प्रियं पुत्त्रं लक्ष्मणञ्च महाबलम् ॥ २० ॥ अयं हि मां दीपयते
समुत्थितस्तनूजशोकप्रभवो हुताशनः। महीमिमां रश्मिभि-
रुत्तमप्रभो यथा निदाघे भगवान् दिवाकरः ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
त्रिचत्वारिंशः सर्गः।

---

विलपन्तीं तथा तां तु कौशल्यां प्रमदोत्तमाम्। एवं धर्मे स्थिता धर्मं सुमित्रा वाक्यमब्रवीत् ॥ १ ॥ तवायं सद्गुणैर्युक्तः स पुत्त्रः पुरुषोत्तमः। किन्ते विलपितेनैवं कृपणं रुदितेन वा ॥२॥ यस्तवार्ये गतः पुत्त्रस्त्यक्त्वा राज्यं महाबलः। साधु कुर्वन् महात्मानं पितरं सत्यवादिनम् ॥ ३ ॥ शिष्टैराचरिते सम्यक् शश्वत् प्रेत्य फलोदये। रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदा-

सङ्गता। वयमत्रानुयास्यामः पुरं चेदं गमिष्यति॥ २५॥
अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः। सहोपजीव्यं
राष्ट्रञ्च पुरञ्च सपरिच्छदम्॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा
वनेचरः। वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम्॥२७॥
ततः शून्यां गतजनां वसुधां पादपैः सह। त्वमेका शाधि
दुर्वृत्ता प्रजानामहिते रता॥२८॥ न हि तद्भविता राष्ट्रं यत्र
रामो न भूपतिः। तद्वनं भविता राष्ट्रं यत्र रामो निवत्
स्यति॥२९॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति।
त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः॥३०॥ यद्यपि त्वं
क्षितितलाद्गगनं चोत्पतिष्यति। पितृवंशचरित्रज्ञः सोऽन्यथा
न करिष्यति॥३१॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम्।
लोके न हि स विद्येत यो न राममनुव्रतः॥३२॥ द्रक्ष्यस्यद्यैव
कैकेयि पशुव्यालमृगद्विजान्। गच्छतः सह रामेण पादपांश्च
तदुन्मुखान्॥३३॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै
व्यपनीय चीरम्। न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्
वसनं वसिष्ठः॥३४॥ एकस्य रामस्य वने निवासस्त्वया वृतः
केकयराजपुत्रि। विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह
राघवेण॥३५॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु
राजपुत्री। वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्र
दाने॥३६॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्र
तिमप्रभावे। नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रति
कारकामा॥३७॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः।

द्रष्टासि पुनरागतम्। जहि शोकञ्च मोहञ्च देवि सत्यं ब्रवीमि
ते ॥ २१ ॥ शिरसा चरणावेतौ वन्दमानमनिन्दिते। पुन-
र्द्रक्ष्यसि कल्याणि पुत्त्रं चन्द्रमिवोदितम् ॥ २२ ॥ पुनः प्रविष्टं
दृष्ट्वा तमभिषिक्तं महाश्रियम्। समुत्स्रक्ष्यसि नेत्राभ्यां शीघ्र-
मानन्दजं जलम् ॥ २३ ॥ मा शोकं देवि दुःखम्वा न रामे दृश्यते-
ऽशिवम्। क्षिप्रं द्रक्ष्यसि पुत्त्रं त्वं ससीतं सह लक्ष्मणम् ॥ २४ ॥
त्वया शेषो जनश्चायं समाश्वास्यो यतोऽनघे। किमिदानीमिदं
देवि करोषि हृदि विक्लवम् ॥ २५ ॥ नार्हा त्वं शोचितुं देवि
यस्यास्ते राघवः सुतः। न हि रामात् परो लोके विद्यते सत्पथे
स्थितः ॥ २६ ॥ अभिवादयमानन्तं दृष्ट्वा ससुहृदं सुतम्।
मुदाश्रु मोक्ष्यसे क्षिप्रं मेघरेखेव वार्षिकी ॥ २७ ॥ पुत्त्रस्ते
वरदः क्षिप्रमयोध्यां पुनरागतः। कराभ्यां मृदुपीनाभ्यां चरणौ
पीड़यिष्यति ॥ २८ ॥ अभिवाद्य नमस्यन्तं शूरं ससुहृदं
सुतम्। मुदास्रैः प्रोक्ष्यसे पुत्त्रं मेघराजिरिवाचलम् ॥ २९ ॥
आश्वासयन्ती विविधैश्च वाक्यैर्वाक्योपचारे कुशलानवद्या। रा-
मस्य तां मातरमेवमुक्त्वा देवी सुमित्रा विरराम रामा ॥ ३० ॥
निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः। सद्यः
शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
चतुश्चत्वारिंशः सर्गः।

—०—

अनुरक्ता महात्मानं रामं सत्यपराक्रमम्। अनुजग्मुः प्रया-
न्तन्तं वनवासाय मानवाः ॥ १ ॥ निवर्त्तितेऽपि च बलात् सुहृ-
द्वर्गे च राजनि। नैव ते सन्न्यवर्त्तन्त रामस्यानुगता रथम् ॥२॥
अयोध्यानिलयानां हि पुरुषाणां महायशाः। बभूव गुणस-

सङ्गता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥ अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥ ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः । तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति । त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यति । पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् । लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः कैकयराजपुत्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्रदाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः ।

रामसम्भ्रान्तमानसाः। ऊचुः परमसन्तप्ता रामं वाक्यमिदं द्विजाः॥
२०॥ ब्राह्मण्यं कृत्स्नमेव त्वां ब्रह्मण्यमनुगच्छति। द्विजस्कन्धाधि-
रूढास्त्वामग्नयोऽप्यनुयान्त्यमी ॥ २१॥ वाजपेयसमुत्थानिच्छ-
त्राण्येतानि पश्य नः। पृष्ठतोऽनुप्रयातानि मेघानिव जला-
त्यये॥ २२॥ अनवाप्तातपत्रस्य रश्मिसन्तापितस्य ते। एभि-
श्छायां करिष्यामः स्वच्छत्रैर्वाजपेयकैः॥ २३॥ या हि नः
सततं बुद्धिर्वेदमन्त्रानुसारिणी। त्वत्कृते सा कृता वत्स वनवा-
सानुसारिणी॥ २४॥ हृदयेष्ववतिष्ठन्ते वेदा ये नः परं
धनम्। वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः॥ २५॥
न पुनर्निश्चयः कार्य्यस्त्वद्गतौ सुकृता मतिः। त्वयि धर्मव्यपेक्षे तु
किं स्याद्धर्ममपेक्षितम्॥ २६॥ याचितो नो निवर्त्तस्व हंस-
शुक्लशिरोरुहैः। शिरोभिर्निभृताचार महीपतनपांशुलैः॥२७॥
बहूनां वितता यज्ञा द्विजानां य इहागताः। तेषां समाप्ति-
रायत्ता तव वत्स निवर्त्तने॥ २८॥ भक्तिमन्तीह भूतानि
जङ्गमाजङ्गमानि च। याचमानेषु तेषु त्वं भक्तिं भक्तेषु
दर्शय॥ २९॥ अनुगन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः। उन्नता
वायुवेगेन विक्रोशन्तीव पादपाः॥ ३०॥ निश्चेष्टाहारसञ्चारा
वृक्षैकस्थाननिश्चिताः। पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्प-
नम्॥ ३१॥ एवं विक्रोशतां तेषां द्विजातीनां निवर्त्तने।
ददृशे तमसा तत्र वारयन्तीव राघवम्॥ ३२॥ ततः सुमन्त्रोऽपि
रथाद्विमुच्य श्रान्तान् हयान् सम्परिवर्त्त्य शीघ्रम्। पीतोदकां-
स्तोयपरिप्लुताङ्गानचारयद्वै तमसाविदूरे॥ ३३॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

पञ्चचत्वारिंशः सर्गः।

---

सङ्गता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥ अन्तःपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं राष्ट्रञ्च पुरञ्च सपरिच्छदम् ॥२६॥ भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥ ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि दुर्वृत्ता प्रजानामहिते रता ॥ २८ ॥ न हि तद्भविता राष्ट्रं यत्र रामो न भूपतिः । तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥ न ह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति । त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥ यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यति । पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१ ॥ तत्त्वया पुत्रगर्द्धिन्या पुत्रस्य कृतमप्रियम् । लोके न हि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥ द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३ ॥ अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम् । न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥ एकस्य रामस्य वने निवासस्त्वया वृतः कैकयराजपुत्रि । विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५ ॥ यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री । वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसम्प्रदाने ॥ ३६ ॥ तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे । नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

सप्तत्रिंशः सर्गः ।

---

अवसत्तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १७ ॥ उत्थाय तु महातेजाः प्रकृतीस्तानिशाम्य च। अब्रवीद्भ्रातरं रामो लक्ष्मणं पुण्यलक्षणम् ॥ १८ ॥ अस्मद्व्यपेक्षान् सौमित्रे निरपेक्षान् गृहेष्विमान्। वृक्षमूलेषु संसुप्तान् पश्य लक्ष्मण साम्प्रतम् ॥ १९ ॥ यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्त्तने। अपि प्राणान्न्यसिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥ २० ॥ यावदेव तु संसुप्तास्तावदेव वयं लघु। रथमारुह्य गच्छामः पन्थानमकुतो भयम् ॥ २१ ॥ अतो भूयोपि नेदानीमिक्ष्वाकुपुरवासिनः। स्वपेयुरनुरक्ता मां वृक्षमूलेषु संश्रिताः ॥ २२ ॥ पौरा ह्यात्मकृताद्दुःखाद्विप्रमोच्या नृपात्मजैः। न तु खल्वात्मना योज्या दुःखेन पुरवासिनः ॥ २३ ॥ अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितम्। रोचते मे तथा प्राज्ञ क्षिप्रमारुह्यतामिति ॥२४॥ अथ रामोऽब्रवीत् सूतं शीघ्रं संयुज्यतां रथः। गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ॥ २५ ॥ सूतस्ततः सन्त्वरितः स्यन्दनं तैर्हयोत्तमैः। योजयित्वा तु रामस्य प्राञ्जलिः प्रत्यवेदयत् ॥ २६ ॥ अयं युक्तो महाबाहो रथस्ते रथिनाम्बर। त्वरयारोह भद्रन्ते ससीतः सहलक्ष्मणः ॥ २७ ॥ तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः। शीघ्रगामाकुलावर्त्ताम् तमसामतरन्नदीम् ॥ २८ ॥ स सन्तीर्य्य महाबाहुः श्रीमान् शिवमकण्टकम्। प्रपद्यत महामार्गमभयं भयदर्शिनम् ॥ २९ ॥ मोहनार्थन्तु पौराणां सूतं रामोऽब्रवीद्वचः। उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥ ३० ॥ मुहूर्त्तन्त्वरितं गत्वा निवर्त्तय रथं पुनः। यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥३१॥ रामस्य तु वचः श्रुत्वा तथा चक्रे च सारथिः। प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२ ॥ तौ सम्प्रयुक्तन्तु रथं समास्थितौ तदा ससीतौ रघुवंशवर्द्धनौ। प्रचोदयामास ततस्तुर-

कुमान् स सारथिर्येन पथा तपोवनम् ॥ ३३ ॥ ततः समास्थाय रथं महारथः ससारथिर्दाशरथिर्वनं ययौ। उदङ्मुखं तं तु रथं चकार सः प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
षट्चत्वारिंशः सर्गः।

---

प्रभातायान्तु शर्वर्य्यां पौरास्ते राघवं विना। शोकोपहतनिश्चेष्टा बभूवुर्हतचेतसः ॥ १ ॥ शोकजाश्रुपरिद्यूना वीक्षमाणास्ततस्ततः। आलोकमपि रामस्य न पश्यन्ति स्म दुःखिताः ॥ २ ॥ ते विषादार्त्तवदना रहितास्तेन धीमता। कृपणाः करुणा वाचो वदन्ति स्म मनीषिणः ॥ ३ ॥ धिगस्तु खलु निद्रां तां ययापहृतचेतनाः। नाद्य पश्यामहे रामं पृथूरस्कं महाभुजम् ॥ ४ ॥ कथं रामो महाबाहुः स तथा वितथक्रियः। भक्तं जनमभित्यज्य प्रवासं राघवो गतः ॥ ५ ॥ यो नः सदा पालयति पिता पुत्रानिवौरसान्। कथं रघूणां स श्रेष्ठस्त्यक्त्वा नो विपिनं गतः ॥ ६ ॥ इहैव निधनं यामः महाप्रस्थानमेव वा। रामेण रहितानां हि किमर्थं जीवितं हितम् ॥ ७ ॥ सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च। तैः प्रज्वाल्य चितां सर्वे प्रविशामोऽथ पावकम् ॥ ८ ॥ किं वक्ष्यामो महाबाहुरनसूयः प्रियम्वदः। नीतः स राघवोऽस्माभिरिति वक्तुं कथं क्षमम् ॥ ९ ॥ सा नूनं नगरी दीना दृष्ट्वास्मान् राघवं विना भविष्यति निरानन्दा सस्त्रीबालवयोधिका ॥ १० ॥ निर्यातास्तेन वीरेण सह नित्यं महात्मना। विहीनास्तेन च पुनः कथं द्रक्ष्याम तां पुरीम् ॥ ११ ॥ इतीव बहुधा वाचो

शाङ्कमुद्वीक्ष्य ते जनाः । विलपन्ति स्म दुःखार्त्ता विवत्सा इव
धेनवः ॥ १२ ॥ ततो मार्गानुसारेण गत्वा किञ्चित् ततः क्षणम् ।
मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥ रथमार्गानु-
सारेण न्यवर्तन्त मनस्विनः । किमिदं किं करिष्यामो दैवेनो-
पहता इति ॥ १४ ॥ ततो यथागतेनैव मार्गेण क्लान्तचेतसः ।
अयोध्यामगमन् सर्वे पुरीं व्यथितसज्जनाम् ॥ १५ ॥
आलोक्य नगरीं तां च क्षयव्याकुलमानसाः । आवर्त्तयंत ते-
ऽश्रूणि नयनैः शोकपीड़ितैः ॥ १६ ॥ एषा रामेण नगरी
रहिता नाति शोभते । आपगा गरुड़ेनेव ह्रदादुद्धृत-
पन्नगा ॥ १७ ॥ चन्द्रहीनमिवाकाशन्तोयहीनमिवार्णवम् ।
अपश्यन्निहतानन्दं नगरं ते विचेतसः ॥ १८ ॥ ते तानि
वेश्मानि महाधनानि दुःखेन दुःखोपहता विशन्तः । नैवं
प्रजग्मुः स्वजनं परं वा निरीक्षमाणाः प्रविनष्टहर्षाः ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सप्तचत्वारिंशः सर्गः ॥४७॥

—०—

तेषामेवं विषण्णानां पीड़ितानामतीव च । बाष्पविप्लुत-
नेत्राणां सशोकानां मुमूर्षताम् ॥ १ ॥ अभिगम्य निवृत्तानां
रामं नगरवासिनाम् । उद्गतानीव सत्वानि बभूवुरमन-
स्विनाम् ॥ २ ॥ स्वं स्वं निलयमागम्य पुत्रदारैः समावृताः ।
अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ॥ ३ ॥ न चा-
हृष्यन्न चामोदन्वणिजो न प्रसारयन् । न चाशोभन्त पण्यानि
नापठन् गृहमेधिनः ॥ ४ ॥ नष्टं दृष्ट्वा नाभ्यनन्दन्
विपुलं वा धनागमम् । पुत्रं प्रथमजं लब्ध्वा जननी नाभ्य-

नन्दत ॥ ५ ॥ गृहे गृहे रुदन्त्यश्च भर्तारं गृहमागतम्। व्यगर्हयन्त दुःखार्ता वाग्भिस्तोत्रैरिव द्विपान् ॥ ६ ॥ किं नु तेषां गृहैः कार्यं किं दारैः किं धनेन वा। पुत्रैर्वा किं सुखैर्वापि ये न पश्यन्ति राघवम् ॥ ७ ॥ एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया। योनुगच्छति काकुत्स्थं रामं परिचरन्वने ॥ ८ ॥ आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च। येषु यास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥ ९ ॥ शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकाननाः। आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ १० ॥ काननं वापि शैलं वा यं रामोनुगमिष्यति। प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥ ११ ॥ विचित्रकुसुमापीडा बहुमञ्जरिधारिणः। राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२ ॥ अकाले चापि मुख्यानि पुष्पाणि च फलानि च। दर्शयिष्यन्त्यनुक्रोशाद्गिरयो राममागतम् ॥ १३ ॥ प्रस्रविष्यन्ति तोयानि विमलानि महीधराः। विदर्शयन्तो विविधान् भूयश्चित्रांश्च निर्झरान् ॥ १४ ॥ पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम्। यत्र रामो भयं नात्र नास्ति तत्र पराभवः ॥ १५ ॥ स हि शूरो महाबाहुः पुत्रो दशरथस्य च। पुरा भवति नो दूरादनुगच्छाम राघवम् ॥ १६ ॥ पादच्छाया सुखोदर्का तादृशस्य महात्मनः। स हि नाथो जनस्यास्य स गतिः स परायणम् ॥ १७ ॥ वयं परिचरिष्यामः सीतां यूयञ्च राघवम्। इति पौरस्त्रियो भर्तॄन् दुःखार्तास्तु तदब्रुवन् ॥ १८ ॥ युष्माकं राघवोरण्ये योगक्षेमं विधास्यति। सीता नारी जनस्यास्य योगक्षेमं करिष्यति ॥ १९ ॥ कोन्वनेनाप्रतीतेन सोत्कण्ठितजनेन च। संप्रीयेतामनोज्ञेन वासेन हृतचेतसा ॥ २० ॥ कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत्। नहि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥

२१॥ यया पुत्त्रस्य भर्ता च त्यक्तस्त्वैश्वर्यकारणात्। कं सा
परिहरेदन्यं कैकेयी कुलपांसनी॥ २२ ॥ कैकेय्या न वयं
राज्ये भृतका हि वसेमहि। जीवन्त्या जातु जीवन्त्यः पुत्त्रै-
रपि शपामहे॥ २३ ॥ या पुत्त्रं पार्थिवेन्द्रस्य प्रवासयति
निर्घृणा। कस्तां प्राप्य सुखं जीवेदधर्मां दुष्टचारिणीम्॥ २४॥
उपद्रुतमिदं सर्वमनालम्बमनायकम्। कैकेय्यास्तु कृते सर्वं
विनाशमुपयास्यति॥ २५ ॥ नहि प्रव्रजिते रामे जीविष्यति
महीपतिः। मृते दशरथे व्यक्तं विलोपस्तदनन्तरम्॥ २६॥
ते विषं पिबतालोड्य क्षीणपुण्याः सुदुःखिताः। राघवं वानु-
गच्छध्वमश्रुतिं वापि गच्छत॥ २७॥ मिथ्या प्रव्राजितो रामः
सभार्यः सहलक्ष्मणः। भरते सन्निबद्धाः स्म सौनिके पशवो
यथा॥ २८ ॥ पूर्णचन्द्राननः श्यामो गूढजत्रुररिन्दमः।
आजानुबाहुः पद्माक्षो रामो लक्ष्मणपूर्वजः॥ २९॥ पूर्वाभि-
भाषी मधुरः सत्यवादी महाबलः। सौम्यश्च सर्वलोकस्य चन्द्र-
वत् प्रियदर्शनः॥ ३०॥ नूनं पुरुषशार्दूलो मत्तमातङ्ग-
विक्रमः। शोभयिष्यत्यरण्यानि विचरन् स महारथः॥ ३१॥
तास्तथा विलपन्त्यस्तु नगरे नागरस्त्रियः। चुक्रुशुर्दुःख-
सन्तप्ता मृत्योरिव भयागमे॥ ३२ ॥ इत्येवं विलपन्तीनां
स्त्रीणां वेश्मसु राघवम्। जगामास्तं दिनकरो रजनी चाभ्य-
वर्त्तत॥ ३३ ॥ नष्टज्वलनसम्पाता प्रशान्ताध्यायसत्कथा।
तिमिरेणानुलिप्तेव तदा सा नगरी बभौ॥ ३४ ॥ उपशान्त-
वणिक्पण्या नष्टहर्षा निराश्रया। अयोध्यानगरी चा-
सीत् नष्टतारमिवांबरम्॥ ३५ ॥ तथा स्त्रियो राम-
निमित्तमातुरा यथा सुते भ्रातरि वा विवासिते। विलप्य
दीना रुरुदुर्विचेतसः सुतैर्हि तासामधिकोऽपि सोऽभवत्॥३६॥
प्रशान्तगीतोत्सवनृत्यवादना विभ्रष्टहर्षा पिहितापणोदया।

तथा ह्ययोध्यानगरी बभूव सा महार्णवः संक्षुभितोदको यथा ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

रामोऽपि रात्रिशेषेणाते नैव महदन्तरम्। जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥ तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा। उपास्य तु शिवां सन्ध्यां विषयान्तं व्यगाहत ॥ २ ॥ ग्रामान्विकृष्टसीमांतान् पुष्पितानि वनानि च। पश्यन्नतियथौ शीघ्रं शनैरिव हयोत्तमैः ॥ ३ ॥ शृण्वन्वाचो मनुष्याणां ग्रामसम्वासवासिनाम्। विगर्हतां हि कैकेयीं क्रूरां क्रूरेण कर्मणा। राजानं धिक् दशरथं कामस्य वशमास्थितम् ॥ ४ ॥ हा नृशंसाद्य कैकेयी पापा पापानुबन्धिनी। तीक्ष्णा सम्भिन्नमर्यादा तीक्ष्णकर्मणि वर्तते ॥ ५ ॥ या पुत्रमीदृशं राज्ञः प्रवासयति धार्मिकम्। वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियम् ॥ ६ ॥ कथं नाम महाभागा सीता जनकनन्दिनी। सदा सुखेष्वभिरता दुःखान्यनुभविष्यति ॥ ७ ॥ अहो दशरथो राजा निस्नेहः स्वसुतं प्रति। प्रजानामनघं रामं परित्यक्तुमिहेच्छति ॥ ८ ॥ एता वाचो मनुष्याणां ग्रामसंवासवासिनाम्। शृण्वन्नतियथौ वीरः कोशलान् कोशलेश्वरः ॥ ९ ॥ ततो वेदश्रुतिं नाम शिववारिं महानदीम्। उत्तीर्य्याभिमुखः प्रायादगस्त्याध्युषितां दिशम् ॥ १० ॥ गत्वा तु सुचिरं कालं ततः शीतवहां नदीम्। गोमतीं गोयुतानूपाम-तरत्सागरङ्गमाम् ॥ ११ ॥ गोमतीं चाप्यतिक्रम्य राघवः

शीघ्रगैर्हयैः। मयूरहंसाभिरुतामतरत् स्यन्दिकां नदीम् ॥ १२ ॥ स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा। स्फीतां राष्ट्रावृतां रामो वैदेहीमन्वदर्शयत् ॥ १३ ॥ सूत इत्येवमाभाष्य सारथिं तमभीक्ष्णशः। हंसमत्तस्वरः श्रीमानुवाच पुरुषोत्तमः ॥ १४ ॥ कदाहं पुनरागम्य सरय्वाः पुष्पिते वने। मृगयां पर्यटिष्यामि मात्रा पित्रा च सङ्गतः ॥ राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगयावने। काले कृतां तां मनुजैर्धन्विनामभिकाङ्क्षितम् ॥ १६ ॥ नात्यर्थमभिकाङ्क्ष्यामि मृगयां सरयूवने। रतिर्ह्येषातुला लोके राजर्षिगणसम्मता ॥ १७ ॥ स तमध्वानमैक्ष्वाकुः सूतं मधुरया गिरा। तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
एकोनपञ्चाशत् सर्गः।

---

विशालान् कोशलान् रम्यान् यात्वा लक्ष्मणपूर्वजः। अयोध्याभिमुखो धीमान् प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥ आपृच्छे त्वां पुरि श्रेष्ठे काकुत्स्थपरिपालिते। दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥ २ ॥ निवृत्तवनवासस्त्वामनृणो जगतीपतेः। पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह सङ्गतः ॥ ३ ॥ ततो रुचिरताम्राक्षो भुजमुद्यम्य दक्षिणम्। अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥ ४ ॥ अनुक्रोशो दया चैव यथार्हं मयि वः कृता। चिरं दुःखस्य पापीयो गम्यतामथ सिद्धये ॥ ५ ॥ तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम्। विलपन्तो नरा घोरं प्रातिष्ठंश्च क्वचित् क्वचित् ॥ ६ ॥

तथा विलपतां तेषामदृश्यानां च राघवः। अचक्षुर्विषयं प्राया-
द्यथार्कः क्षणदामुखे॥ ७॥ ततो धान्यधनोपेतान्दान-
शीलजनान् शिवान्। अकुतश्चिद्भयान् रम्यांश्चैत्ययूपसमा-
वृतान्॥ ८॥ उद्यानाम्रवणोपेतान् सम्पन्नसलिलाशयान्।
तुष्टपुष्टजनाकीर्णान् गोकुलाकुलसेवितान्॥ ९॥ रक्षणी-
यान्नरेन्द्राणां ब्रह्मघोषाभिनादितान्। रथेन पुरुषव्याघ्रः
कोशलानत्यवर्तत॥ १०॥ मध्येन मुदितं स्फीतं रम्योद्यान-
समाकुलम्। राज्यं भोज्यं नरेन्द्राणां ययौ धृतिमतां वरः॥
११॥ तत्र त्रिपथगां दिव्यां शीततोयामशैवलाम्। ददर्श
राघवो गङ्गां रम्यां ऋषिनिषेविताम्॥ १२॥ आश्रमैर-
विदूरस्थैः श्रीमद्भिः समलंकृताम्। कालेऽप्सरोभिर्हृष्टाभिः
सेविताम्भोह्रदां शिवाम्॥ १३॥ देवदानवगन्धर्वैः किन्नरै-
रुपशोभिताम्। नागगन्धर्वपत्नीभिः सेवितां सततं शिवाम्॥
१४॥ देवाक्रीड़शताकीर्णां देवोद्यानयुतां नदीम्। देवार्थ-
माकाशगमां विख्यातां देवपद्मिनीम्॥ १५॥ जलाघाताट्ट-
हासोग्रां फेननिर्मलहासिनीम्। क्वचिद्वेणीकृतजलां
क्वचिदावर्त्तशोभिताम्॥ १६॥ क्वचित् स्तिमितगम्भीरां
क्वचिद्वेगसमाकुलाम्। क्वचिद्गम्भीरनिर्घोषां क्वचिद्भैरव-
निस्वनाम्॥ १७॥ देवसंघाप्लुतजलां निर्मलोत्पलसंकु-
लाम्। क्वचिदाभोगपुलिनां क्वचिन्निर्मलवालुकाम्॥ १८॥
हंससारससङ्घुष्टां चक्रवाकोपशोभिताम्। सदामत्तैश्च
विहगैरभिसन्नादितान्तराम्॥ १९॥ क्वचित्तीररुहैर्वृक्षैर्माः-
लाभिरिव शोभिताम्। क्वचित् फुल्लोत्पलच्छन्नां क्वचित् पद्म-
वनाकुलाम्॥ २०॥ क्वचित् कुमुदखण्डैश्च कुट्मलैरुपशोभि-
ताम्। नानापुष्परजोध्वस्तां समदामिव च क्वचित्॥ २१॥ व्यपे-
तमलसङ्घातां मणिनिर्मलदर्शनाम्। दिशागजैर्वनगजैर्मत्तैश्च

वरवारणैः ॥ २२ ॥ देवोपवाह्यैश्च मुहुः सन्नादितवनान्तराम् ।
प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः ॥ २३ ॥ फलपुष्पैः
किसलयैर्वृतां गुल्मैर्द्विजैस्तथा ॥ विष्णुपादच्युतां दिव्यां
महापापप्रणाशिनीम् ॥ २४ ॥ शिशुमारैश्च नक्रैश्च भुजङ्गैश्च
समन्विताम् । शङ्करस्य जटाजूटात् भ्रष्टां सागरतेजसा ॥२५॥
समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् । आससाद महा-
बाहुः शृङ्गवेरपुरम्प्रति ॥ २६ ॥ तामूर्मिकलिलावर्तामन्ववेक्ष्य
महारथः । सुमन्त्रमब्रवीत् सूत तमिहैवाद्य वसामहे ॥ २७ ॥ अवि-
दूरादयं नद्या बहुपुष्पप्रबालवान् । सुमहानिङ्गुदीवृक्षो
वसामो चैव सारथे ॥ २८ ॥ प्रेक्ष्यामि सरितां श्रेष्ठां संमान्य-
सलिलां शिवाम् । देवदानवगन्धर्वमृगपन्नगपक्षिणाम् ॥२९॥
लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवम् । उक्त्वा तमिङ्गुदीवृक्षं
तथोपययतुर्हयैः ॥ ३० ॥ रामोऽभियाय तं रम्यं वृक्ष-
मिक्ष्वाकुनन्दनः । रथादवतरत्तस्मात् सभार्यः सहलक्ष्मणः ॥३१॥
सुमन्त्रोऽप्यवतीर्यैव मोचयित्वा हयोत्तमान् । वृक्षमूलगतं
राममुपतस्थे कृताञ्जलिः ॥ ३२ ॥ तत्र राजा गुहो नाम
रामस्यात्मसमः सखा । निषादजात्यो बलवान् स्थपतिश्चेति
विश्रुतः ॥ ३३ ॥ स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥ ३४ ॥ ततो
निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् । सह सौमित्रिणा रामः
समागच्छद्गुहेन सः ॥ ३५ ॥ तमार्त्तः सम्परिष्वज्य गुहो राघव-
मब्रवीत् । यथायोध्या तथेदन्ते राम किङ्करवाणि ते ॥ ३६ ॥
ईदृशं हि महाबाहो कः प्राप्स्यत्यतिथिं प्रियम् । ततो गुणवद-
न्नाद्यमुपादाय पृथग्विधम् ॥ ३७ ॥ अर्घ्यञ्चोपानयच्छीघ्रं वाक्यं
चेदमुवाच ह । स्वागतं ते महाबाहो तवेयमखिला मही ॥३८॥
वयं प्रेष्या भवान् भर्ता साधु राज्यं प्रशाधि नः । भक्ष्यं भोज्यञ्च

पेयञ्च लेह्यञ्चैतदुपस्थितम् ॥ ३९ ॥ शयनानि च मुख्यानि वाजिनां खादनं च ते । गुहमेवं ब्रुवाणन्तु राघवः प्रत्युवाच ह ॥ ४० ॥ अर्चिताश्चैव हृष्टाश्च भवता सर्व्वदा वयम् । पद्भ्यामभिगमाच्चैव स्नेहसन्दर्शनेन च ॥ ४१ ॥ भुजाभ्यां साधुवृत्ताभ्यां पीडयन्वाक्यमब्रवीत् । दिष्ट्या त्वां गुह पश्यामि ह्यरोगं सह बान्धवः । अपि ते कुशलं राष्ट्रे मित्रेषु च धनेषु च ॥ ४२ ॥ यत्त्विदं भवता किञ्चित् प्रीत्या समुपकल्पितम् । सर्वं तदनुजानामि न हि वर्ते प्रतिग्रहे ॥ ४३ ॥ कुशचीराजिनधरं फलमूलाशनञ्च माम् । विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ॥ ४४ ॥ अश्वानां खादनेनाहमर्थी नान्येन केनचित् । एतावतात्रभवता भविष्यामि सुपूजितः ॥ ४५ ॥ एते हि दयिता राज्ञः पितुर्दशरथस्य मे । एतैः सुविहितैरश्वैर्भविष्याम्यहमर्चितः ॥ ४६ ॥ अश्वानां प्रतिपानञ्च खादनञ्चैव सोऽन्वशात् । गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ॥ ४७ ॥ ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् । जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥ ४८ ॥ तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः । सभार्य्यस्य ततोऽभ्येत्य तस्थौ हृक्षमुपाश्रितः ॥ ४९ ॥ गुहोऽपि सह सूतेन सौमित्रिमनुभाषयन् । अन्वजाग्रत्ततो राममप्रमत्तो धनुर्धरः ॥ ५० ॥ तथा शयानस्य ततोऽस्य धीमतो यशस्विनो दाशरथेर्महात्मनः । अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीयाय सुखेन शर्वरी । ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे पञ्चाशत्सर्गः ।

---

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम्। गुहः सन्तापसन्तप्तो राघवं वाक्यमब्रवीत्॥ १॥ इयं तात सुखा शय्या त्वदर्थमुपकल्पिता। प्रत्याश्वसिहि साध्वस्यां राजपुत्त्र यथासुखम्॥ २॥ उचितोयं जनः सर्वः क्लेशानां त्वं सुखोचितः। गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम्॥ ३॥ न हि रामात्प्रियतमो ममास्ते भुवि कश्च न। ब्रवीम्येव च तत् सत्यं सत्येनैव च ते शपे॥ ४॥ अस्य प्रसादादाशंसे लोकेस्मिन् सुमहद्यशः। धर्मावाप्तिञ्च विपुलामर्थकामौ च पुष्कलौ॥ ५॥ सोहं प्रियसखं रामं शयानं सह सीतया। रक्षिष्यामि धनुष्पाणिः सर्वथा ज्ञातिभिः सह॥ ६॥ न मेस्त्यविदितं किञ्चिद्वनेस्मिन् चरतः सदा। चतुरङ्गं ह्यपि बलं सुमहत् प्रसहेमहि॥ ७॥ लक्ष्मणस्तु ततोवाच रक्ष्यमाणास्त्वयानघ। नात्र भीता वयं सर्वे धर्ममेवानुपश्यता॥ ८॥ कथं दाशरथौ भूमौ शयाने सह सीतया। शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा॥ ९॥ यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि। तं पश्य सुखसंसुप्तं तृणेषु सह सीतया॥ १०॥ यो मन्त्रतपसा लब्धो विविधैश्च पराक्रमैः। एको दशरथस्यैष पुत्त्रः सदृशलक्षणः॥ ११॥ अस्मिन् प्रव्राजिते राजा न चिरं वर्त्तयिष्यति। विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति॥ १२॥ विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः। निर्घोषोपरतं भ्रातर्मन्ये राजनिवेशनम्॥ १३॥ कौशल्या चैव राजा च तथैव जननी मम। नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमाम्॥१४॥ जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया। तत् दुःखं यदि कौशल्या वीरसूर्विनशिष्यति॥ १५॥ अनुरक्तजनाकीर्णा सुखा लोकप्रियावहा। राजव्यसनसंसृष्टा सा पुरी विनशिष्यति॥ १६॥ कथं पुत्त्रं महात्मानं ज्येष्ठपुत्त्रमपश्यतः। शरीरं

धारयिष्यन्ति प्राणा राज्ञो महात्मनः॥ १७॥ विनष्टे नृपतौ पश्चात् कौशल्या विनशिष्यति। अनन्तरञ्च मातापि मम नाशमुपैष्यति॥ १८॥ अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम्। राज्ये राममनिक्षिप्य पिता मे विनशिष्यति॥ १९॥ सिद्धार्थाः पितरं वृत्तं तस्मिन् काले ह्युपस्थिते। प्रेतकार्य्येषु सर्व्वेषु संस्करिष्यन्ति राघवम्॥ २०॥ रम्यचत्वरसंस्थानां सुविभक्तमहापथाम्। हर्म्यप्रासादसम्पन्नां गणिकावरशोभिताम्॥२१॥ रथाश्वगजसम्बाधां तूर्य्यनादविनादिताम्। सर्वकल्याणसम्पूर्णां हृष्टपुष्टजनाकुलाम्॥ २२॥ आरामोद्यानसम्पन्नां समाजोत्सवशालिनीम्। सुखिता विचरिष्यन्ति राजधानीं पितुर्मम॥ २३॥ अपि जीवेद्दशरथो वनवासात् पुनर्वयम्। प्रत्यागम्य महात्मानमपि पश्याम सुव्रतम्॥ २४॥ अपि सत्यप्रतिज्ञेन सार्द्धं कुशलिनो वयम्। निवृत्ते वनवासेऽस्मिन्नयोध्यां प्रविशेमहि॥ २५॥ परिदेवयमानस्य दुःखार्त्तस्य महात्मनः। तिष्ठतो राजपुत्त्रस्य शर्वरी सात्यवर्त्तत॥ २६॥ तथा हि सत्यं ब्रुवति प्रजाहिते नरेन्द्रसूनौ गुरुसौहृदाद्गुरुः। मुमोच वाष्पं व्यसनाभिपीड़ितो ज्वरातुरो नाग इव व्यथातुरः॥ २७॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

एकपञ्चाशत् सर्गः।

---

प्रभातायान्तु शर्व्वर्य्यां पृथुवक्षा महायशाः। उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम्॥ १॥ भास्करोदयकालोऽसौ गता भगवती निशा। असौ तु कृष्णविहगः कोकिलस्तात कूजति॥ २॥ बर्हिणानाञ्च निर्घोषः श्रूयते नदतां वने।

नराम जाह्नवीं सौम्य शीघ्रगां सागरङ्गमाम् ॥ ३ ॥ विज्ञाय
रामस्य वचः सौमित्रिर्मित्रनन्दनः। गुहमामन्त्र्य सूतञ्च सो-
तिष्ठद्भ्रातुरग्रतः ॥ ४ ॥ स तु रामस्य वचनं निशम्य प्रति-
गृह्य च। स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत् ॥ ५ ॥
अस्य वाहनसंयुक्तां कर्णग्राहवतीं शुभाम्। सुप्रतारां दृढां तीर्थे
शीघ्रनावमुपाहर ॥ ६ ॥ तं निशम्य गुहादेशं गुहामात्यगणो
महान्। उपोह्य रुचिरं नावं गुहाय प्रत्यवेदयत् ॥ ७ ॥ ततः
स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत्। उपस्थितेयं नौर्देव भूयः
किं करवाणि ते ॥ ८ ॥ तवामरसुतप्रख्य तर्तुं सागरगामि-
नीम्। नौरियं पुरुषव्याघ्र शीघ्रमारोह सुव्रत ॥ ९ ॥ अथो-
वाच महातेजा रामो गुहमिदं वचः। कृतकामोऽस्मि भवता
शीघ्रमारोप्यतामिति ॥ १० ॥ ततः कलापान् संनह्य खड्गौ
बध्वा च धन्विनौ। जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥११॥
राममेवं तु धर्मज्ञमुपागम्य विनीतवत्। किमहं करवाणीति
सूतः प्राञ्जलिरब्रवीत् ॥ १२ ॥ ततोऽब्रवीद्दाशरथिः सुमन्त्रं
स्पृशन् करेणोत्तमदक्षिणेन। सुमन्त्र शीघ्रं पुनरेव याहि
राज्ञः सकाशे भव चाप्रमत्तः ॥ १३ ॥ निवर्त्तस्वेत्युवाचैनमे-
तावद्धि कृतं मम। रथं विहाय पद्भ्यां तु गमिष्यामो महा-
वनम् ॥ १४ ॥ आत्मानं त्वभ्यनुज्ञातमवेक्ष्यार्त्तः स सारथिः।
सुमन्त्रः पुरुषव्याघ्रमैक्ष्वाकुमिदमब्रवीत् ॥ १५ ॥ नातिक्रान्त-
मिदं लोके पुरुषेणेह केनचित्। तव सभ्रातृभार्य्यस्य वासः
प्राकृतवद्वने ॥ १६ ॥ न मन्ये ब्रह्मचर्य्ये वा स्वधीते वा फलो-
दयः। मार्दवार्जवयोर्वापि त्वं चेद्व्यसनमागतः ॥ १७ ॥
सह राघव वैदेह्या भ्रात्रा चैव वने वसन्। त्वं गतिं प्राप्स्यसे
वीर त्रीन् लोकांस्तु जयन्निव ॥ १८ ॥ वयं खलु हता राम
यत्त्वया ह्युपवञ्चिताः। कैकेय्या वशमेष्यामः पापाया दुःख

भागिनः॥ १६॥ इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तदा। दृष्ट्वा दूरं गतं रामं दुःखार्त्तो रुरुदे चिरम्॥ २०॥ ततस्तु विगते वाष्पे सूतं स्पृष्टोदकः शुचिम्। रामस्तु मधुरं वाक्यं पुनः पुनरुवाच तम्॥ २१॥ इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये। यथा दशरथो राजा मा न शोचेत्तथा कुरु॥ २२॥ शोकोपहतचेताश्च वृद्धश्च जगतीपतिः। कामभारावसन्नश्च तस्मादेतद्ब्रवीमि ते॥ २३॥ यद्यथाज्ञापयेत् किञ्चित् स महात्मा महीपतिः। कैकेय्याः प्रियकामार्थं कार्य्यं त्तदविकाङ्क्षया॥ २४॥ एतदर्थं हि राज्यानि प्रशासन्ति नराधिपाः। यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते॥ २५॥ यद्यथा सुमहाराजो नालीकमधिगच्छति। न च ताम्यति शोकेन सुमन्त्र कुरु तत्तथा॥ २६॥ अदृष्टदुःखं राजानं वृद्धमार्य्यं जितेन्द्रियम्। ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः॥ २७॥ न चाहमनुशोचामि लक्ष्मणो न च मैथिली। अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति वा॥ २८॥ चतुर्दशसु वर्षेषु निवृत्तेषु पुनः पुनः। लक्ष्मणं मां च सीतां च द्रक्ष्यसे क्षिप्रमागतान्॥ २६॥ एवमुक्त्वा तु राजानं मातरञ्च सुमन्त्र मे। अन्याश्च देवीः सहिताः कैकेयीञ्च पुनः पुनः॥ ३०॥ आरोग्यं ब्रूहि कौशल्यामथ पादाभिवन्दनम्। सीताया मम चार्य्यस्य वचनाल्लक्ष्मणस्य च॥ ३१॥ ब्रूयाश्चापि महाराजं भरतं शीघ्रमानय। आगतश्चापि भरतः स्थाप्यो नृपमते पदे॥ ३२॥ भरतञ्च परिष्वज्य यौवराज्येऽभिषिच्य च। अस्मत्सन्तापजं दुःखं न त्वामभिभविष्यति॥ ३३॥ भरतश्चापि वक्तव्यो यथा राजनि वर्त्तसे। तथा मातृषु वर्त्तेथाः सर्व्वास्वेवाविशेषतः॥३४॥ यथा च तव कैकेयी सुमित्रा च विशेषतः। तथैव देवी कौशल्या मम माता विशेषतः॥ ३५॥ तातस्य प्रियकामेन यौव-

राज्यमवेक्षता। लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ॥३६॥ निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः। तत् सर्वं वचनं श्रुत्वा स्नेहात् काकुत्स्थमब्रवीत्। ३७॥ यदहं नोपचारेण ब्रूयां स्नेहादविक्लवः। भक्तिमानिति तत्तावद्वाक्यं त्वं क्षन्तुमर्हसि ॥ ३८॥ कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम्। तव तात वियोगेन पुत्त्रशोकातुरामिव ॥ ३९ ॥ सराममपि तावन्मे रथं दृष्ट्वा तदा जनः। विना रामं रथं दृष्ट्वा विदीर्य्येतापि सा पुरी ॥ ४० ॥ दैन्यं हि नगरी गच्छेत् दृष्ट्वा शून्यमिमं रथम्। सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥४१॥ दूरेऽपि निवसन्तं त्वां मानसेनाग्रतः स्थितम्। चिन्तयन्त्योऽद्य नूनं त्वां निराहाराः कृताः प्रजाः ॥ ४२ ॥ दृष्टं तद्वै त्वया राम यादृशं तत् प्रवासने। प्रजानां संकुलं वृत्तं त्वच्छोकक्लान्तचेतसम् ॥ ४३ ॥ आर्त्तनादो हि यः पौरैरुन्मुक्तस्त्वत्प्रवासने। सरथं मां निशम्यैव कुर्य्युः शतगुणं ततः ॥ ४४ ॥ अहं किञ्चापि वक्ष्यामि देवीं तव सुतो मया। नीतोऽसौ मातुलकुलं सन्तापं माकृथा इति ॥ ४५ ॥ असत्यमपि नैवाहं ब्रूयां वचनमीदृशम्। कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४६ ॥ मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः। कथं रथं त्वया हीनं प्रवाक्ष्यन्ति हयोत्तमाः ॥ ४७ ॥ तन्न शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ। वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४८ ॥ यदि मे याचमानस्य त्यागमेव करिष्यसि। सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९ ॥ भविष्यन्ति वने यानि तपोविघ्नकराणि ते। रथेन प्रतिबाधिष्ये तानि सर्वाणि राघव ॥५०॥ त्वत्कृतेन मया प्राप्तं रथचर्य्याकृतं सुखम् आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥ ५१ ॥ प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः। प्रीत्याभिहितमिच्छामि भव मे प्रत्यनन्तरः ॥५२॥

इमेपि च त्वया वीर यदि ते वनवासिनः। परिचर्य्यां करिष्यन्ति प्राप्स्यन्ति परमाङ्गतिम् ॥ ५३ ॥ तव शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन्। अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहम् ॥ ५४ ॥ न हि शक्या प्रवेष्टुं सा मयायोध्या त्वया विना। राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ॥ ५५ ॥ वनवासे चयं प्राप्ते ममैष हि मनोरथः। यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥ ५६ ॥ चतुर्दश हि वर्षाणि सहितस्य त्वया वने। चणभूतानि यास्यन्ति शतशस्तु ततोन्यथा ॥ ५७ ॥ भृत्यवत्सल तिष्ठन्तं भर्तृपुत्त्र गते पथि। भक्तं भृत्यं स्थितं स्थित्या न मां त्वं हातुमर्हसि ॥ ५८ ॥ एवं बहुविधं दीनं याचमानं पुनः पुनः। रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५९ ॥ जानामि परमां भक्तिं मयि ते भर्तृवत्सल। शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ६० ॥ नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी। कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः। ६१ ॥ यदि तुष्टा हि सा देवी वनवासं गते मयि। राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् ॥ ६२ ॥ एष मे प्रथमः कल्पो यदंवा मे यवीयसी। भरतारक्षितं स्फीतं पुत्त्रराज्यमवाप्नुयात् ॥ ६३ ॥ मम प्रियार्थं राज्ञश्च सुमन्त्र त्वं पुरीं व्रज। सन्दिष्टश्चापि यानर्थांस्तांस्तान् ब्रूयास्तथा तथा ॥ ६४ ॥ इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनः पुनः। गुहं वचनमक्लीवो रामो हेतुमदब्रवीत् ॥ ६५ ॥ नेदानीं गुह योग्यायं वासो मे सजने वने। अवश्यं त्वाश्रमे वासः कर्त्तव्यस्तद्गतो विधिः ॥ ६६ ॥ सोहं गृहीत्वा नियमं तपस्विजनभूषणम्। हितकामः पितुर्भूयः सीताया लक्ष्मणस्य च ॥ ६७ ॥ जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय। तत् क्षीरं राजपुत्त्राय गुहः क्षिप्रमुपाहरत् ॥ ६८ ॥ लक्ष्मणस्यात्मनश्चैव राम-

स्तनाकाराञ्जटाः। दीर्घबाहुर्नरव्याघ्रो जटिलत्वमधारयत् ॥६९॥
तौ तदा चीरवसनौ जटामण्डलधारिणौ। अशोभेतामृषि-
समौ भ्रातरौ रामलक्ष्मणौ ॥ ७० ॥ ततो वैखानसं मार्गमा-
स्थाय सहलक्ष्मणः। व्रतमादिष्टवान् रामः सहायं गुहमब्र-
वीत् ॥ ७१ ॥ अप्रमत्तो बले कोशे दुर्गे जनपदे तथा। भवेथा
गुह राज्यं हि दुरारक्षतमं मतम् ॥ ७२ ॥ ततस्तं समनु-
ज्ञाप्य गुहमिक्ष्वाकुनन्दनः। जगाम तूर्णमव्यग्रः सभार्यः सह-
लक्ष्मणः ॥ ७३ ॥ स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः।
तितीर्षुः शीघ्रगां गङ्गामिदं लक्ष्मणमब्रवीत् ॥ ७४ ॥ आरोह
त्वं नरव्याघ्र स्थितां नावमिमां शनैः। सीतां चारोपयान्वक्षं
परिगृह्य मनस्विनीम् ॥ ७५ ॥ स भ्रातुः शासनं श्रुत्वा सर्व-
मप्रतिकूलयन्। आरोप्य मैथिलीं पूर्वमारुरोहात्मवांस्ततः ॥७६॥
अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः। ततो निषादाधि-
पतिर्गुहो ज्ञातीनचोदयत् ॥ ७७ ॥ राघवोऽपि महातेजा नाव-
मारुह्य तां ततः। ब्रह्मवत् क्षत्रवच्चैव जजाप हितमात्मनः ॥७८॥
आचम्य च यथाशास्त्रं नदीं तां सह सीतया। प्रणमत्
प्रीतिसंहृष्टो लक्ष्मणश्चामितप्रभः ॥ ७९ ॥ अनुज्ञाय सुम-
न्त्रञ्च सबलञ्चैव तं गुहम्। आस्थाय नावं रामस्तु चोदया-
मास नाविकान् ॥ ८० ॥ ततस्तैश्चोदिता नौका कर्णधारसमा-
हिता। शुभस्फावेगाभिहता गङ्गासलिलमत्यगात् । ८१ ॥
मध्यन्तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता। वैदेही प्राञ्जलि-
र्भूत्वा तां नदीमिदमब्रवीत् ॥ ८२ ॥ पुत्त्रो दशरथस्यायं महा-
राजस्य धीमतः। निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः ॥८३॥
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने। भ्रात्रा सह मया
चैव पुनः प्रत्यागमिष्यति ॥ ८४ ॥ ततस्त्वां देवि सुभगे क्षेमेण
पुनरागता। यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनि ॥ ८५ ॥

त्वं हि त्रिपथगे देवि ब्रह्मलोकं समीक्षसे। भार्य्या चोदधिराजस्य लोकेऽस्मिन् सम्प्रदृश्यसे ॥ ८६ ॥ सा त्वां देवि नमस्यामि प्रशंसामि च शोभने। प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥८७॥ गवां शतसहस्रञ्च वस्त्राण्यन्नञ्च पेशलम्। ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८८ ॥ सुराघटसहस्रेण मांसभूतोदनेन च। यक्ष्ये त्वां प्रीयतां देवि पुरीं पुनरुपागता ॥८९॥ यानि त्वत्तीरवासीनि दैवतानि च सन्ति हि। तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९० ॥ पुनरेव महाबाहुर्मया भ्राता च सङ्गतः। अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे ॥ ९१ ॥ तथा सम्भाषमाणा सा सीता गङ्गामनिन्दिताम्। दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥ तीरन्तु समनुप्राप्य नावं हित्वा नरर्षभः। प्रातिष्ठत सह भ्रात्रा वैदेह्या च परन्तपः ॥ ९३ ॥ अथाब्रवीन्महाबाहुः सुमित्रानन्दवर्द्धनम्। भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४ ॥ अवश्यं रक्षणं कार्य्यं मद्विधैर्विजने वने। अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु ॥ ९५ ॥ पृष्ठतोऽनुगमिष्यामि सीतां त्वां चानुपालयन्। अन्योन्यस्य हि नो रक्षा कर्त्तव्या पुरुषर्षभ ॥ ९६ ॥ न हि तावदतिक्रान्ता सुकरा काचन क्रिया। अद्य दुःखन्तु वैदेही वनवासस्य वेत्स्यति ॥ ९७ ॥ प्रनष्टजनसम्बाधं क्षेत्रारामविवर्जितम्। विषमञ्च प्रपातञ्च वनमद्य प्रवेक्ष्यति ॥९८॥ श्रुत्वा रामस्य वचनं प्रतस्थे लक्ष्मणोऽग्रतः। अनन्तरञ्च सीताया राघवो रघुनन्दनः ॥ ९९ ॥ गतन्तु गङ्गापरपारमाशु रामं सुमन्त्रः सततं निरीक्ष्य। अध्वप्रकर्षाद्विनिवृत्तदृष्टिर्मुमोच बाष्पं व्यथितस्तपस्वी ॥ १०० ॥ स लोकपालप्रतिमप्रभावस्तीर्त्वा महात्मा वरदो महानदीम्। ततः समृद्धांच्छुभसस्यमालिनः क्षणेन वत्स्यान्मुदितानुपागमत् ॥ १०१ ॥ तौ तत्र हत्वा चतुरो

महाबलगान् वराहमृश्यं पृषतं महारुरुम्। आदाय मेध्यन्त्वरितं बुभुक्षितौ वासाय काले ययतुर्वनस्पतिम्॥ १०२॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
द्विपञ्चाशत् सर्गः।

—०—

स तं वृक्षं समासाद्य सन्ध्यामन्वास्य पश्चिमाम्। रामो रमयतां श्रेष्ठ इतिहोवाच लक्ष्मणम्॥ १॥ अद्येयं प्रथमा रात्रिर्याता जनपदाद्बहिः। या सुमन्त्रेण रहिता तां नोत्कण्ठितुमर्हसि। वनञ्चातीव विजनं श्वापदैरभिनादितम्। विभीषिकाभिर्विततं झिल्लिकागणनादितम्॥ २॥ जागर्त्तव्यमतन्द्रिभ्यामद्यप्रभृति रात्रिषु। योगक्षेमौ हि सीताया वर्त्तेते लक्ष्मणावयोः॥ ३॥ रात्रिं कथञ्चिदेवेमां सौमित्रे वर्त्तयामहे। अपवर्त्तामहे भूमावास्तीर्य्य स्वयमर्जितैः॥ ४॥ स तु संविश्य मेदिन्यां महार्हशयनोचितः। इमाः सौमित्रये रामो व्याजहार कथाः शुभाः॥ ५॥ ध्रुवमद्य महाराजो दुःखं स्वपिति लक्ष्मण। कृतकामा तु कैकेयी तुष्टा भवितुमर्हति॥ ६॥ सा हि देवी महाराजं कैकेयी राज्यकारणात्। अपि न च्यावयेत् प्राणान् दृष्ट्वा भरतमागतम्॥ ७॥ अनाथश्च हि वृद्धश्च मया चैव विनाकृतः। किं करिष्यति कामात्मा कैकेय्या वशमागतः॥ ८॥ इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम्। काम एवार्थधर्माभ्यां गरीयानिति मे मतिः॥ ९॥ कोह्यविद्वानपि पुमान् प्रमदायाः कृते त्यजेत्। छन्दानुवर्त्तिनं पुत्त्रं तातो मामिव लक्ष्मण॥ १०॥ सुखी बत सभार्य्यश्च भरतः कैकयीसुतः। मुदितान् कोशलानेको यो भोक्ष्य-

त्यधिराजवत्॥ ११॥ स हि राज्यस्य सर्वस्य सुखमेकं भवि-
ष्यति। ताते तु वयसातीते मयि चारण्यमाश्रिते॥ १२॥
अर्थधर्मौ परित्यज्य यः काममनुवर्त्तते। एवमापद्यते क्षिप्रं
राजा दशरथो यथा॥ १३॥ मन्ये दशरथान्ताय मम प्रव्राज-
नाय च। कैकेयी साम्प्रमम्प्राप्ता राज्याय भरतस्य च॥ १४॥
अपीदानीं तु कैकेयी सौभाग्यमदमोहिता। कौशल्याञ्च
सुमित्राञ्च सा प्रबाधेत मत्कृते॥ १५॥ मातास्मत्कारणाद्देवी
सुमित्रा दुःखमावसेत्। अयोध्यामित एव त्वं काले प्रविश
लक्ष्मण॥ १६॥ अहमेको गमिष्यामि सीतया सह दण्डकान्।
अनाथाया हि नाथस्त्वं कौशल्याया भविष्यसि॥ १७॥ क्षुद्र-
कर्मा हि कैकेयी द्वेषादन्यायमाचरेत्। परिदद्याद्धि धर्मज्ञ
गरन्ते मम मातरम्॥ १८॥ नूनं जात्यन्तरे तात स्त्रियः
पुत्त्रैः वियोजिताः। जनन्या मम सौमित्रे तदद्यैतदुपस्थि-
तम्॥ १९॥ मया हि चिरपुष्टेन दुःखसम्वर्द्धितेन च। विप्र-
युज्यत कौशल्या फलकाले धिगस्तु माम्॥२०॥ मास्म सीमन्तिनी
काचिज्जनयेत् पुत्त्रमीदृशम्। सौमित्रे योऽहमम्बाया दद्मि
शोकमनन्तकम्॥ २१॥ मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण
शारिका। यत्तस्याः श्रूयते वाक्यं शुक पादमरेर्दश॥ २२॥
शोचन्त्याश्चाल्पभाग्याया न किञ्चिदुपकुर्वता। पुत्त्रेण किमपु-
त्त्राया मया कार्य्यमरिन्दम॥ २३॥ अल्पभाग्या हि मे माता
कौशल्या रहिता मया। शेते परमदुःखार्त्ता पतिता शोक-
सागरे॥ २४॥ एकोऽप्यहमयोध्याञ्च पृथिवीञ्चापि लक्ष्मण।
तरेयमिषुभिः क्रुद्धो ननु वीर्य्यमकारणम्॥ २५॥ अधर्म-
भयभीतश्च परलोकस्य चानघ। तेन लक्ष्मण नाद्याहमात्मान-
मभिषेचये॥ २६॥ एतदन्यच्च करुणं विलप्य विजने बहु।
अश्रुपूर्णमुखो दीनो निशि तूष्णीमुपाविशत्॥२७॥ विलापो-

भरतं रामं गतार्च्चिषमिवानलम्। समुद्रमिव निर्वेगमाश्वा-
सयत लक्ष्मणः॥ २८॥ एवमद्य पुरी राम अयोध्या युधिनां
वर। निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी॥ २९॥
नैतदौपयिकं राम यदिदम्परितप्यसे। विषादयसि सीताञ्च
मां चैव पुरुषर्षभ॥ ३०॥ न च सीता त्वया हीना न चाहमपि
राघव। मुहूर्त्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥ ३१॥
न हि तातं न शत्रुघ्नं न सुमित्रां परन्तप। द्रष्टुमिच्छेय-
मद्याहं स्वर्गं चापि त्वया विना॥ ३२॥ ततस्तत्र सुखासीनौ
नातिदूरे निरीक्ष्य ताम्। न्यग्रोधे सुकृतां शय्यां भेजाते धर्म-
वत्सलौ॥ ३३॥ स लक्ष्मणस्योत्तमपुष्कलं वचो निशम्य चैवं
वनवासमादरात्। समाः समस्ता विदधे परन्तपः प्रपद्य धर्मं
सुचिराय राघवः॥ ३४॥ ततस्तु तस्मिन् विजने महाबलौ
महावने राघववंशवर्द्धनौ। न तौ भयं सम्भ्रममभ्युपेयतुर्यथैव
सिंहौ गिरिसानुगोचरौ॥ ३५॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे

त्रिपञ्चाशत् सर्गः।

---

ते तु तस्मिन् महावृक्षे उषित्वा रजनीं शुभाम्। विमले-
ऽभ्युदिते सूर्ये तस्माद्देशात् प्रतस्थिरे॥ १॥ यत्र भागीरथीं
गङ्गां यमुनाभिप्रवर्त्तते। जग्मुस्तं देशमुद्दिश्य विगाह्य सुमह-
द्वनम्॥ २॥ ते भूमिभागान् विविधान् देशांश्चापि मनोहरान्।
अदृष्टपूर्व्वान् पश्यन्तस्तत्र तत्र यशस्विनः॥ ३॥ यथा चेमेण
सम्पश्यन् पुष्पितान् विविधान् द्रुमान्। निवृत्तमात्रे दिवसे
रामः सौमित्रिमब्रवीत्॥ ४॥ प्रयागमभितः पश्य सौमित्रे धूम-

मुत्तमम्। अग्नेर्भगवतः केतुं मन्ये सन्निहितो मुनिः ॥ ५ ॥
नूनं प्राप्ताः स्म सम्भेदं गङ्गायमुनयोर्वयम्। तथा हि श्रूयते
शब्दो वारिणोर्वारिघर्षजः ॥ ६ ॥ दारूणि परिभिन्नानि
वनजैरुपजीविभिः। छिन्नाश्चाप्याश्रमे चैते दृश्यन्ते विविधा
द्रुमाः ॥ ७ ॥ धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे।
गङ्गायमुनयोः सन्धौ प्रापतुर्निलयं मुनेः ॥ ८ ॥ रामस्त्वाश्रम-
मासाद्य त्रासयन् मृगपक्षिणः। गत्वा मुहूर्त्तमध्वानं भरद्वाज-
मुपागमत् ॥ ९ ॥ ततस्त्वाश्रममासाद्य मुनेर्दर्शनकाङ्क्षिणौ।
सीतयानुगतौ वीरौ दूरादेवावतस्थतुः ॥ १० ॥ स प्रविश्य
महात्मानमृषिं शिष्यगणैर्वृतम्। संशितव्रतमेकाग्रं तपसा लब्ध-
चक्षुषम् ॥ ११ ॥ हुताग्निहोत्रं दृष्ट्वैव महाभागः कृताञ्जलिः।
रामः सौमित्रिणा सार्द्धं सीतया चाभ्यवादत ॥ १२ ॥ न्यवे-
दयत चात्मानं तस्मै लक्ष्मणपूर्वजः। पुत्रौ दशरथस्यावां भग-
वन् रामलक्ष्मणौ ॥ १३ ॥ भार्य्या ममेयं कल्याणि वैदेही
जनकात्मजा। मां चानुयाता विजनं तपोवनमनिन्दिता ॥१४॥
पिता प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः। अयमन्वगमद्भ्-
भ्राता वनमेव धृतव्रतः ॥ १५ ॥ पित्रा नियुक्ता भगवन् प्रवे-
क्ष्यामस्तपोवनम्। धर्ममेवाचरिष्यामस्तत्र मूलफलाशनाः ॥ १६ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्त्रस्य धीमतः। उपानयत धर्मात्मा
गामर्घ्यमुदकं ततः ॥ १७ ॥ नानाविधानन्नरसान् वन्यमूल-
फलाश्रयान्। तेभ्यो ददौ तप्ततपा वासञ्चैवाभ्यकल्पयत् ॥ १८ ॥
मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः। राममागतमभ्यर्च्य
स्वागतेनागतं मुनिः ॥ १९ ॥ प्रतिगृह्य तु तामर्च्चामुपविष्टं
स राघवम्। भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ २० ॥
चिरस्य खलु काकुत्स्थ पश्याम्यहमुपागतम्। श्रुतं तव मया
चैव विवासनमकारणम् ॥ २१ ॥ अवकाशो विविक्तोऽयं महा-

नद्योः समागमे। पुण्यश्च रमणीयश्च वसत्विह भवान् सुखम्॥२२॥
एवमुक्तस्तु वचनं भरद्वाजेन राघवः। प्रत्युवाच शुभं वाक्यं
रामः सर्वहिते रतः॥ २३॥ भगवन्नित आसन्नः पौरजानपदो
जनः। सुदर्शमिह मां प्रेक्ष्य मन्येऽहमिममाश्रमम्॥ २४॥
आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः। अनेन कारणे-
नाहमिह वासं न रोचये॥ २५॥ एकान्ते पश्य भगवन्नाश्रम-
स्थानमुत्तमम्। रमते यत्र वैदेही सुखार्हा जनकात्मजा॥ २६॥
एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः। राघवस्य तु
तद्वाक्यमर्थग्राहकमब्रवीत्॥ २७॥ दशक्रोश इतस्तात गिरि
र्यस्मिन्निवत्स्यसि। महर्षिसेवितः पुण्यः पर्वतः शुभदर्शनः॥२८॥
गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः। चित्रकूट इति
ख्यातो गन्धमादनसन्निभः॥ २९॥ यावता चित्रकूटस्य नरः
शृङ्गाण्यवेक्ष्यते। कल्याणानि समाधत्ते न मोहे कुरुते मनः॥३०॥
ऋषयस्तत्र बहवो विहृत्य शरदां शतम्। तपसा दिवमारूढाः
कपालशिरसा सह॥ ३१॥ प्रविविक्तमहं मन्ये तं वासं भवतः
सुखम्। इह वा वनवासाय वस राम मया सह॥ ३२। स
रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम्। सभार्यं सह च
भ्राता प्रतिजग्राह हर्षयन्॥ ३३॥ तस्य प्रयागे रामस्य तं
महर्षिमुपेयुषः। प्रपन्ना रजनी पुण्या चित्राः कथयतः
कथाः॥ ३४॥ सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखो-
चितः। भरद्वाजाश्रमे रम्ये तां रात्रिमवसत् सुखम्॥ ३५॥
प्रभातायान्तु शर्वर्य्यां भरद्वाजमुपागमत्। उवाच नरशार्दूलो
मुनिं ज्वलिततेजसम्॥ ३६॥ शर्वरीं भगवन्नद्य सत्यशील
तवाश्रमे। उषिताः स्मोऽह वसतिमनुजानातु नो भवान्॥३७।
रात्र्यान्तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम्। मधुमूलफलो
पेतं चित्रकूटं व्रजेति ह॥ ३८॥ वासमौपयिकं मन्ये तव राम

महाबल । नानानगगणोपेतः किन्नरोरग-सेवितः ॥ ३९ ॥
मयूरनादाभिरतो गजराजनिषेवितः । गम्यतां भवता शैल-
श्चित्रकूटः स विश्रुतः ॥ ४० ॥ पुण्यश्च रमणीयश्च बहुमूल-
फलायुतः । तत्र कुञ्जरयूथानि मृगयूथानि चैव हि ॥ ४१ ॥
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव । सरित्प्रस्रवणप्रस्था-
न्दरीकन्दरनिर्झरान् ॥ ४२ ॥ चरतः सीतया सार्द्धं नन्दि-
ष्यति मनस्तव । यतोऽह्लादकरा एते जन्तवो वनचा-
रिणः ॥ ४३ ॥ प्रहृष्टकोयष्टिककोकिलस्वनैर्विनोदयन्तश्च
सुखं परं शिवम् । मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः सुरम्यमासाद्य
समावसाश्रमम् ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
चतुःपञ्चाशत् सर्गः ।

---

उषित्वा रजनीं तत्र राजपुत्त्रावरिन्दमौ । महर्षिमभि-
वाद्याथ जग्मतुस्तङ्गिरिं प्रति ॥ १ ॥ तेषां स्वस्त्ययनञ्चैव महर्षिः
स चकार ह । प्रस्थितान् प्रेक्ष्य तांश्चैव पिता पुत्त्रानिवौर-
सान् ॥ २ ॥ ततः प्रचक्रमे वक्तुं वचनं स महामुनिः । भर-
द्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३ ॥ गङ्गायमुनयोः
सन्धिमादाय मनुजर्षभ । कालिन्दीमनुगच्छेतां नदीं पश्चान्मु-
खाश्रिताम् ॥ ४ ॥ अथासाद्य तु कालिन्दीं प्रतिस्रोतः समा-
गताम् । तस्यास्तीर्थं प्रचरितं प्रकामं प्रेक्ष्य राघव ॥ ५ ॥ तत्र
यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् । ततो न्यग्रोधमासाद्य
महान्तं हरितच्छदम् ॥ ६ ॥ परीतं बहुभिर्वृक्षैः श्यामं सि-
द्धोपसेवितम् । तस्मिन् सीताञ्जलिं कृत्वा प्रयुञ्जीताशिषः

क्रियाम् ॥ ७॥ समासाद्य च तं वृक्षं वसेद्वातिक्रमेत वा।
क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम् ॥ ८॥ शल्लकी-
वदरीमिश्रं राम वन्यैश्च यामुनैः। स पन्था चित्रकूटस्य गतस्य
बहुशो मया ॥ ९॥ रम्यो मार्दवयुक्तश्च दावैश्चैव विवर्जितः।
इति पन्थानमादिश्य महर्षिः सन्न्यवर्त्तत ॥ १०॥ अभिवाद्य
तथेत्युक्त्वा रामेण विनिवर्त्तितः। उपावृत्ते मुनौ तस्मिन्
रामो लक्ष्मणमब्रवीत् ॥ ११॥ कृतपुण्याः स्म भद्रन्ते मुनि-
र्यन्नोनुकम्पते। इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ॥१२॥
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम्। अथासाद्य तु
कालिन्दीं शीघ्रस्रोतस्विनीं नदीम् ॥ १३। चिन्तामापेदिरे
सद्यो नदीजलतितीर्षवः। तौ काष्ठसङ्घाटमयौ चक्रतुः
सुमहाप्लवम् ॥ १४॥ शुष्कैर्वंशैः समाकीर्णमुशीरैश्च समा-
वृतम्। ततो वैतसशाखाश्च जम्बुशाखाश्च वीर्य्यवान् ॥ १५॥
चकार लक्ष्मणः छित्वा सीतायाः सुखमासनम्। तत्र श्रिय-
मिवाचिन्त्यां रामो दाशरथिः प्रियाम् ॥ १६॥ ईषत् स
लज्जमानान्तामध्यारोपयत् प्लवम्। पार्श्वे तत्र च वैदेही वसने
भूषणाणि च ॥ १७॥ प्लवे कठिनकाजञ्च रामश्चक्रे समा-
हितः। आरोप्य सीतां प्रथमं सङ्घाटं परिगृह्य तौ। १८॥
ततः प्रतेरतुर्यत्तौ प्रीतौ दशरथात्मजौ। कालिन्दीमध्यमा-
याता सीता त्वेनामवन्दत ॥ १९॥ स्वस्ति देवि तरामि त्वां
पारयेन्मे पतिव्रतम्। यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन
च ॥ २१॥ स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम्।
कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः ॥ २१॥ तीर-
मेवाभिसम्प्राप्ता दक्षिणं वरदर्शिनी। ततः प्लवेनांशुमतीं शीघ्र-
गामूर्मिमालिनीम् ॥ २२॥ तीरजैर्बहुभिर्वृक्षैः सन्तेरुर्य-
मुनां नदीम्। ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ॥२३॥

श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् । न्यग्रोधं समुपागम्य वैदेही चाभ्यवन्दत ॥ २४ ॥ नमस्तेस्तु महावृक्ष पारयेन्मे पतिव्रतम् । कौशल्याञ्चैव पश्येम सुमित्राञ्च यशस्विनीम् । २५ ॥ इति सीताञ्जलिं कृत्वा पर्य्यगच्छन्मनस्विनी । अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् ॥ २६ ॥ दयिताञ्च विधेयाञ्च रामो लक्ष्मणमब्रवीत् । सीतामादाय गच्छ त्वमग्रतो भरतानुज ॥ २७ ॥ पृष्ठतोनुगमिष्यामि सायुधो द्विपदांवर । यद्यत् फलं प्रार्थयते पुष्पं वा जनकात्मजा ॥ २८ ॥ तत्तत् प्रयच्छ वैदेह्या यत्रास्या रमते मनः । एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ॥ २९ ॥ अदृष्टरूपां पश्यन्ती रामं प्रयच्छ सावला । रमणी तान् बहुविधान् पादपान् कुसुमोत्करान् ॥३०॥ सीतावचनसंरब्ध आनयामास लक्ष्मणः । विचित्रवालुकजलां हंससारसनादिताम् ॥ ३१ ॥ रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् । क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ॥३२॥ बहून्मेध्यान् मृगान् हत्वा चेरतुर्य्यमुनावने ॥ ३३ ॥ विहृत्य ते वर्हिणयूथनादिते शुभे वने वारणवानरायुते । समं नदीवप्रमुपेत्य सत्वरं निवासमाजग्मुरदीनदर्शनाम् ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
पञ्चपञ्चाशत् सर्गः ।

---

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् । प्रबोधयामास शनैर्लक्ष्मणं रघुपुङ्गवः ॥ १ ॥ सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनम् । सम्प्रतिष्ठामहे कालः प्रस्थानस्य परन्तप ॥२॥ स सुप्तस्तु ततो भ्राता समये प्रतिबोधितः । जहौ निद्राञ्च

तन्द्राश्च प्रमक्तश्च परिश्रमम् ॥ ३ ॥ तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम्। पन्थानमृषिभिर्जुष्टं चित्रकूटस्य तं ययुः ॥४॥ ततः सम्प्रस्थितः काले रामः सौमित्रिणा सह। सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५ ॥ आदीप्तानिव वैदेहि सर्वतः पुष्पितान्नगान्। स्वैः पुष्पैः किंशुकान् पश्य मालिनः शिशिरात्यये ॥ ६ ॥ पश्य भल्लातकान् विल्वान् नरैरनुपसेवितान्। फलपुष्पैरवनतान्नूनं शक्ष्याम जीवितुम् ॥ ७ ॥ पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण। मधूनि मधुकारीभिः सम्भृतानि नगे नगे ॥ ८ ॥ एष क्रोशति नत्यूहस्तं शिखी प्रति कूजति। रमणीये वनोद्देशे पुष्पसंस्तरसङ्कटे ॥ ९ ॥ मातङ्गयूथानुसृतं पक्षिसङ्घानुनादितम्। चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १० ॥ समभूमितले रम्ये द्रुमैर्बहुभिरावृते। पुण्ये रंस्यामहे तात चित्रकूटस्य कानने ॥ ११ ॥ ततस्तौ पादचारेण गच्छन्तौ सह सीतया। रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ १२ ॥ तं तु पर्व्वतमासाद्य नानापक्षिगणायुतम्। बहुमूलफलं रम्यं सम्पन्न-सरसोदकम् ॥ १३ ॥ मनोज्ञोयं गिरिः सौम्य नानाद्रुमलतायुतः। बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥ १४ ॥ मुनयश्च महात्मानो वसन्त्यस्मिन् शिलोच्चये। अयं वासो भवेत्तात वयमत्र वसेमहि ॥ १५ ॥ इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः। अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥ १६ ॥ तान्महर्षिः प्रमुदितः पूजयामास धर्मवित्। आस्यतामिति चोवाच स्वागतं तं निवेद्य च ॥ १७ ॥ ज्ञातं मया रघुश्रेष्ठ तवागमनकारणम्। अत्र वासस्तपोवनस्य सकाशे रोचय प्रभो ॥ १८ ॥ इति तेन समाश्वस्तः प्रीयमाणो महारथः। तथेति प्रतिजग्राह ऋषिणोक्तं कृताञ्जलिः ॥ १९ ॥ ततोऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः। सन्निवेश्य यथा-

न्यायमात्मानश्चयेषु प्रभ: ॥ २० ॥ लक्ष्मणानय दारूणि दृढानि च वराणि च । कुरुष्वावसथं सौम्य वासे मेभिरतं मनः ॥ २१ ॥ तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान् द्रुमान् । आजहार ततश्चक्रे पर्णशालामरिन्दमः ॥२२॥ तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् । शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥ २३ ॥ ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् । कर्त्तव्यं वास्तुशमनं सौमित्रे चिरजीविभिः ॥ २४ ॥ मृगं हत्वानय क्षिप्रं लक्ष्मणेह शुभेक्षण । कर्त्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर ॥ २५ ॥ भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा । चकार च यथोक्तं स तं रामः पुनरब्रवीत् ॥ २६ ॥ ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् । त्वर सौम्यमुहूर्त्तोयं ध्रुवश्च दिवसो ह्ययम् ॥ २७ ॥ स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् । अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २८ ॥ तत्तु पक्कं समाज्ञाय निष्टप्तं छिन्नशोणितम् । लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ॥ २९ ॥ अयं सर्वः समस्ताङ्गः शृतः कृष्णमृगो मया । देवता देवसङ्काश यजस्व कुशलो ह्यसि ॥ ३० ॥ रामः स्नात्वा तु नियतो गुणवान् जपकोविदः । संग्रहेणाकरोत् सर्व्वान् मन्त्रान् सत्रावसानिकान् ॥ ३१ ॥ इष्ट्वा देवगणान् सर्व्वान् विवेशावसथं शुचिः । बभूव च मनोह्लादो रामस्यामिततेजसः ॥ ३२ ॥ वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च । वास्तुसंशमनीयानि मङ्गलानि प्रवर्त्तयन् ॥ ३३ ॥ जपञ्च न्यायतः कृत्वा नद्यां स्नात्वा यथाविधि । पापसंशमनं रामश्चकार बलिमुत्तमम् ॥ ३४ ॥ वेदिस्थलविधानानि चैत्यान्यायतनानि च । आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥३५॥ तर्पयित्वा तु भूतानि फलमांसैर्यथोचितैः । प्रवेष्टुं तां मनश्चक्रे रामो राजीवलोचनः ॥ ३६ ॥ तां वृक्षपर्णच्छदनां मनोज्ञां

यथाप्रदेशं सुकृतां निवाताम् । वासाय सर्वे विविशुः समेताः
सभां यथा देवगणाः सुधर्माम् । ३७ ॥ सुरम्यमासाद्य तु
चित्रकूटं नदीञ्च तां माल्यवतीं सुतीर्थाम् । ननन्द हृष्टो मृग-
पक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥ ३८ ।

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
षट्पञ्चाशत् सर्गः ।

—०—

कथयित्वा तु दुःखार्त्तः सुमन्त्रेण चिरं सह । रामे
दक्षिणकूलस्थे जगाम स्वगृहं गुहः । १ ॥ भरद्वाजाभिगमनं
प्रयागे च सभाजनम् । आगिरेर्गमनं तेषां तत्रस्थैरभिलक्षि-
तम् ॥ २ । अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३ ॥ स वनानि
सुगन्धीनि सरितश्च सरांसि च । पश्यन् यतो ययौ शीघ्रं
ग्रामाणि नगराणि च ॥ ४ ॥ ततः सायाह्नसमये द्वितीये-
ऽहनि सारथिः । अयोध्यां समनुप्राप्य निरानन्दान्ददर्श
ह ॥ ५ ॥ स शून्यामिव निःशब्दां दृष्ट्वा परमदुर्मनाः । सुमन्त्र-
श्चिन्तयामास शोकवेगसमाहतः ॥ ६ ॥ कच्चिन्न सगजा
साश्वा सजना सजनाधिपा । रामसन्तापदुःखेन दग्धा शोका-
ग्निना पुरी ॥ ७ ॥ इति चिन्तापरः सूतो वाजिभिः शीघ्र-
यायिभिः । नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८ ॥
सुमन्त्रमभिधावन्तः शतशोऽथ सहस्रशः । क्व राम इति पृच्छन्तः
सूतमभ्यद्रवन्नराः ॥ ९ ॥ तेषां शशंस गङ्गायामहमापृच्छ्य राघ-
वम् । अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १० ॥
ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा नराः । अहोधिगिति

निश्वस्य हा रामेति विचुक्रुशुः ॥ ११ ॥ शुश्राव च वचस्तेषां वृन्दं वृन्दञ्च तिष्ठताम् । हताः स्म खलु ये नेह पश्याम इति राघवम् ॥ १२ ॥ दानयज्ञविवाहेषु समाजेषु महत्सु च । न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥ किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् । इति रामेण नगरं पितेव परिपालितम् ॥ १४ ॥ वातायनगतानाञ्च स्त्रीणामन्वन्तरापणम् । राममेवाभितप्तानां शुश्राव परिदेवितम् ॥१५॥ स राजमार्गमध्येन सुमन्त्रः पिहिताननः । यत्र राजा दशरथस्तमेवोपययौ गृहम् ॥ १६ ॥ सोवतीर्य्य रथाच्छीघ्रं राजवेश्म प्रविश्य च । कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥१७॥ हर्म्यैर्विमानैः प्रासादैरवेक्ष्याथ समागतम् । हाहाकारकृता नार्य्यो रामदर्शनकर्षिताः ॥ १८ ॥ आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः । अन्योन्यमभिवीक्ष्यन्ते व्यक्तमार्त्ततराः स्त्रियः ॥१९॥ ततो दशरथः स्त्रीणां प्रासादेभ्यस्ततस्ततः । रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २० ॥ सह रामेण निर्यातो विना राममिहागतः । सूतः किं नाम कौशल्यां क्रोशन्तीं प्रति वक्ष्यति ॥ २१ ॥ यथा च मन्ये दुर्जीवमेवं न सुकरं ध्रुवम् । आच्छिद्य पुत्त्रे निर्याते कौशल्या यत्र जीवति ॥ २२ ॥ सत्यरूपन्तु तद्वाक्यं राजस्त्रीणां निशामयन् । प्रदीप्त इव शोकेन विवेश सहसा गृहम् ॥ २३ ॥ स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् । पुत्त्रशोकपरिद्यूनमपश्यत्पाण्डुरे गृहे ॥ २४ ॥ अभिगम्य तमासीनं राजानमभिवाद्य च । सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५ ॥ स तूष्णीमेव तच्छ्रुत्वा राजा विद्रुतमानसः । मूर्च्छितो न्यपतद्भूमौ रामशोकाभिपीड़ितः ॥२६॥ ततोन्तःपुरमाविद्धं मूर्च्छिते पृथिवीपतौ । उच्छ्रित्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७ ॥ सुमित्रया तु सहिता

कौशल्या पतितं पतिम्। उत्थापयामास तदा वचनं चेद-
मब्रवीत्॥ २८॥ इमं तस्य महाभाग दूतं दुष्कृतकारिणः।
वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे॥ २९॥ अद्येममनयं
कृत्वा व्यपत्रपसि राघवे। उत्तिष्ठ सुकृतन्तेस्तु शोके न स्यात्
सहायता। ३०॥ देव यस्या भयाद्रामं नानुपृच्छसि सारथिम्।
नेह तिष्ठति कैकेयी विस्रब्धं प्रतिभाष्यताम्॥ ३१॥ सा
तथोक्त्वा महाराजं कौशल्या शोकलालसा। धरण्यां निपपा-
ताशु वाष्पविप्लुतभाषिणी॥ ३२॥ विलपन्तीं तथा दृष्ट्वा
कौशल्यां पतितां भुवि। पतिञ्चावेक्ष्य ताः सर्व्वाः समन्ताद्रुरुदुः
स्त्रियः॥ ३३॥ ततस्तमन्तःपुरनादमुत्थितं समीक्ष्य वृद्धा-
स्तरुणाश्च मानवाः। स्त्रियश्च सर्व्वा रुरुदुः समन्ततः पुरं तदा-
सीत् पुनरेव संकुलम्॥ ३४॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
सप्तपञ्चाशत् सर्गः।

---

प्रत्याश्वस्तो यदा राजा मोहात्प्रत्यागतस्मृतिः। तदा-
जुहाव तं सूतं रामवृत्तान्तकारणात्॥ १॥ तदा सूतो महा-
राजं कृताञ्जलिरुपस्थितः। राममेवानुशोचन्तं दुःखशोक-
समन्वितम्॥ २॥ वृद्धं परमसन्तप्तं नवग्रहमिव द्विपम्।
विनिःश्वसन्तं ध्यायंतमस्वस्थमिव कुञ्जरम्॥३॥ राजा तु रजसा
सूतं ध्वस्ताङ्गं समुपस्थितम्। अश्रुपूर्णमुखं दीनमुवाच पर-
मार्त्तवत्॥ ४॥ क नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः।
सोत्यन्तसुखितः सूत किमशिष्यति राघवः॥ ५॥ दुःखस्यानु-
चितो दुःखं सुमन्त्र शयनोचितः। भूमिपालात्मजो भूमौ शेते

कथमनाथवत् ॥ ६ ॥ यं यान्तमनुयान्ति स्म पदाति रथकुञ्-
जराः । स गच्छति कथं रामो विजनं वनमाश्रितः ॥ ७ ॥
व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् । कथं कुमारौ वैदेह्या
सार्द्धं वनमुपाश्रितौ ॥ ८ ॥ सुकुमार्य्या तपस्विन्या सुमन्त्र सह
सीतया । राजपुत्त्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ९ ॥ सि-
द्धार्थः खलु सूत त्वं येन दृष्टौ ममात्मजौ । वनान्तं प्रविशन्तौ
तावश्विनाविव मन्दरम् ॥ १० ॥ किमुवाच वचो रामः
किमुवाच च लक्ष्मणः । सुमन्त्र वनमासाद्य किमुवाच च मै-
थिली ॥ ११ ॥ आसितं शयितं भुक्तं सूत रामस्य कीर्त्तय ।
जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२ ॥ इति सूतो
नरेन्द्रेण चोदितः सज्जमानया । उवाच वाचा राजानं सवाष्प-
परिवद्धया ॥ १३ ॥ अब्रवीन्मे महाराज धर्म्ममेवानुपालयन् ।
अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च ॥ १४ ॥ सूत मद्वच-
नात्तस्य तातस्य विदितात्मनः । शिरसा वन्दनीयस्य वन्द्यौ
पादौ महात्मनः ॥ १५ ॥ सर्व्वमन्तःपुरं वाच्यं सूत मद्वचना-
त्त्वया । आरोग्यमविशेषेण यथार्हमभिवादनम् ॥ १६ ॥
माता च मम कौशल्या कुशलञ्चाभिवादनम् । अप्रमादश्च
वक्तव्या ब्रूयाश्चैनामिदं वचः ॥ १७ ॥ धर्म्मनित्या यथा काल-
मग्न्यागारपरा भव । देवि देवस्य पादौ च देववत्परिपालय ॥१८॥
अभिमानञ्च मानञ्च त्यक्त्वा वर्त्तस्व मातृषु । अनुराजानमार्य्याञ्च
कैकेयीमम्ब कारय ॥ १९ ॥ कुमारे भरते वृत्तिर्वर्त्तितव्या च
राजवत् । अज्येष्ठापि हि राजानो राजधर्म्ममनुस्मर ॥ २० ॥
भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च । सर्व्वास्वेव यथा-
न्यायं वृत्तिं वर्त्तस्व मातृषु ॥ २१ ॥ वक्तव्यश्च महाबाहुरि-
क्ष्वाकुकुलनन्दनः । पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥२२॥
अतिक्रान्तवया राजा मा स्मैनं व्यपरोरुधः । कुमारराज्ये

जीवस्व यस्यैवाज्ञाप्रवर्त्तनात् ॥ २३ ॥ अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्त्तयन् । मातेव मम माता ते द्रष्टव्या पुत्त्रगर्द्धिनी ॥ २४ ॥ इत्येवं मां महाबाहुर्ब्रुवन्निव महायशाः । रामो राजीवपत्राक्षो भृशमश्रूण्यवर्त्तयत् ॥ २५ ॥ लक्ष्मणस्तु सुसंक्रुद्धो निःश्वसन् वाक्यमब्रवीत् । केनायमपराधेन राजपुत्रो विवासितः ॥ २६ ॥ राजा तु खलु कैकेय्या लघु चाश्रुत्य शासनम् । कृतं कार्य्यमकार्य्यं वा वयं येनाभिपीड़िताः ॥ २७ ॥ यदि प्रव्राजितो रामो लोभकारणकारितम् । वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २८ ॥ इदं तावद्यथाकाममीश्वरस्य कृते कृतम् । रामस्य तु परित्यागे न हेतुमुपलक्षये ॥२९॥ असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् । जनयिष्यति संक्रोशं राघवस्य विवासनम् ॥ ३० ॥ अहन्तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्त्ता च बन्धुश्च पिता च मम राघवः ॥ ३१ ॥ सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते रतम् । सर्वलोकोऽनुरज्येत कथञ्चानेन कर्मणा ॥ ३२ ॥ सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम् । सर्वलोकविरोधेन कथं राजा भविष्यति ॥ ३३ ॥ जानकी तु महाराज निश्वसन्ती तपस्विनी । भूतोपहतचित्तेव विष्ठिता विस्मृता स्थिता ॥ ३४ ॥ अदृष्टपूर्वव्यसना राजपुत्त्री यशस्विनी । तेन दुःखेन रुदती नैव मां किञ्चिदब्रवीत् ॥३५॥ उद्वीक्षमाणा भर्त्तारं मुखेन परिशुष्यता । मुमोच सहसा वाष्पं प्रयान्तमुपवीक्ष्य सा ॥ ३६ ॥ तथैव रामोऽश्रुमुखः कृताञ्जलिः स्थितोऽब्रवील्लक्ष्मणबाहुपालितः । तथैव सीता रुदती तपस्विनी निरीक्षते राजरथं तथैव माम् ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये अयोध्याकाण्डे
अष्टपञ्चाशत् सर्गः ।

---

